रूपकमञ्जरी ग्रन्थमाला—१

# चाणक्य-विजयम्

नाम

नाटकम्

पश्चिमवङ्ग-शिक्षाधिकार-सेवातो विश्रान्तेन प्राध्यापकेन
श्रीविश्वेश्वरविद्याभूषण-काव्यतीर्थेन
विरचितम्

# CĀṆAKYA-VIJAYAṂ

**[ Sanskrit Drama ]**

**By**

**Paṇḍit Viśveśvara-Vidyābhūṣaṇa Kāvyatīrtha**



**CALCUTTA**

**1967**

रूपकमञ्जरी ग्रन्थमाला—१

# चाणक्य-विजयम्

नाम

नाटकम्

पश्चिमवङ्ग-शिक्षाधिकार-सेवातो विश्रान्तेन प्राध्यापकेन
श्रीविश्वेश्वरविद्याभूषण-काव्यतीर्थेन
विरचितम्

# CĀṆAKYA-VIJAYAM

[ Sanskrit Drama ]

By
Paṇḍit Viśveśvara-Vidyābhūṣaṇa Kāvyatīrtha



CALCUTTA
1966

कलिकाता-रवीन्द्रभारती-विश्वविद्यालयाध्यापक-श्रीध्यानेशनारायण चक्रवर्ति

एम्. ए. साहित्यशास्त्रिणा प्रकाशितम्।

"ऋषि-धाम"

पोः अः—दत्तपुकुर, जिः—२४ परगणा, पश्चिमवङ्ग

प्राप्तिस्थानम्

(१) ऋषि-धाम
पोः आः दत्तपुकुर, जिः २४ परगणा,
पश्चिमवङ्ग।

(२) संस्कृत पुस्तकभाण्डार
३८ संख्यक विधान सरणि
कलिकाता-६

*To be had of*

(1) Rishi-Dham
Po. Duttapukur,
Dt. 24 Paraganas, West Bengal.

(2) Sanskrit Pustak Bhandar
38 Bidhan Sarani
Calcutta-6

मूल्यम्—रूप्यकत्रयम्

**Price—Rupees Three only**



Published by

Prof. Dhyanesh Narayan Chakravorty Sāhitya-Śāstrī M.A.

( Rabindra Bharati University, Calcutta )

"RISHI-DHAM"

Po.—Duttapukur, Dt.—24 Paraganas, West Bengal.

Printed by Jogesh Chandra Sarkhel at the Calcutta. Oriental Press Private Ltd. 9, Panchanan Ghosh Lane, Calcutta-9.

# उत्सर्गपत्नम्

यत्स्नेहामृतसिक्त-पुण्यतपसाहं संवर्द्धितः, प्रापितश्चाध्यात्मचेतनास्फुरित-
मानन्दसम्पदं नवनवाभ्युदयलाभेन ; देहान्तेऽपि दिव्यधामस्थो
यः सुधामयं सुमङ्गलं स्नेहाशिषं मयि विकिरति ; तं
ममादिगुरुमशेषपुण्यविग्रहं ज्ञानप्रेमतपोनिलयमानन्द-
घनविग्रहं महेशप्रतिमं स्वर्गतपितृदेवं महा-
महाध्यापककृष्णकान्तकृतिरत्न-देवपादं,

तथा—

या दिव्यस्नेहकरुणा-पुण्यविग्रहा मूर्त्तानन्दमयी
शान्तिसौख्यव्रततपसां प्रतिमूर्त्तिः जननीरूपेण
मामसूत, समपालयत् पुपोष चानन्तकल्याणवर्षणेन,—
मूर्त्तिमतीव्रतचारिणीमानन्दरसविग्रहां जगत्प्रसूतिप्रतिमां
सतीसावित्री-लक्ष्मी-स्वरूपां नित्यधामगतां जननीं कुसुमकामिनी-
देवीञ्च समुद्दिश्य भक्त्यश्रुसिक्तमर्घ्यमिदं निवेदयामीति प्रणतमौलिर्दीनतनयः—

श्रीविश्वेश्वरदेवशर्मा ।

## गुरुमण्डली

कुलगुरुः—श्रीवल्लभाचार्य्यवंशावतंसाः सिद्धतापस-श्रीमन्महेशचन्द्र भट्टाचार्यपादाः ।

परमगुरुः—श्रीमद् ऋषिकालीकिङ्करस्मृतिभूषण-पितामहपादाः ।

महागुरुः—अशेषशास्त्राध्यापका महोपाध्याय-कृष्णकान्त-कृतिरत्न-पितृपादाः ।

मातामहः—मूर्त्तब्राह्मण्यविग्रहाः पुण्यचरित-प्राणकृष्णचक्रवर्त्ति-देवशर्माणः ।

श्वशुरः—महाराज-भट्टाचार्याख्य-प्रख्यात-सिद्धसाधक वंशोद्भवास्तपोधर्मनिरता रुक्मिणीकान्त-भट्टाचार्य-देवशर्माणः ।

आचार्याः—चट्टलसंस्कृतमहाविद्यालयाध्यक्ष-महामहाध्यापकाशेष-शास्त्राचार्या रजनीकान्त-साहित्याचार्यदेवपादाः ।

तथा

पुण्यश्लोक-रजनीकान्ततर्कचूडामणि-

गङ्गाधर-काव्यव्याकरणतीर्थ-

कलिकातासंस्कृतमहाविद्यालयाध्यापक-राजेन्द्रनाथ-विद्याभूषण-चट्टलसंस्कृतमहाविद्यालय-प्रधानाचार्या उमाचरण-तर्करत्न-महोदयाः ;

चट्टलसंस्कृतमहाविद्यालयमहाचार्याः सिद्धयोगि-कालीकिङ्करतर्कपञ्चानन-देवपादाश्चेति ।

# प्राक्कथनम्

## संस्कृतसाहित्यम्—

अनन्तसुषमाविमण्डितो हि संस्कृत-साहित्य-पारावारः। स हि सुधामयो रससिन्धुः। संस्कृतभाषा भारतसंस्कृतेर्जननी प्राणशक्तिर्मर्मग्रन्थिश्च भारतवासिनाम्। मनीषिणां तपोलब्धभावसम्पदां प्रचारेण तथा सारस्वताना-मनुशीलनेन चेयं भारतवर्षीय-विभिन्नप्रदेशान्तर्गत-विभिन्नभाषाभाषिणां जनानां हृदयानि अध्यात्मप्रेम्णा भावैक्येन च संग्रथ्नाति, पोषयति च जनमानसं ज्ञानामृतदानेन। परमानन्दविधायिनी शुद्धसत्त्वोद्दीपनी चेयं देवभाषा सर्वान् प्रमोदयति। किञ्च भारतीयसभ्यतायाः मर्मकथा संस्कृतसाहित्येषु निबद्धा प्रचारयति विश्वभुवनेषु आनन्दमयं ब्रह्मसंवादं जगतां कल्याणाय। छन्दोमयी गद्यपद्यमालिनी ललितमन्द्रसंमण्डितेयं देवभाषा सुशोभते सुचिरमजस्र-नवनव-रचनासम्भारेण, विजयते च तेन विश्वेषु विशिष्टगौरवलाभेन।

## रचनाया इतिकथा—

शैशवे पितृपादसान्निध्येऽभून्मे विद्यारम्भः। प्रात्यहिकोपासनाकाले तत्-पुण्यकण्ठोच्चारिता भावगम्भीरमधुरस्वरसंवलिताः स्तोत्रमालास्तथा श्रुतिमन्त्र-गीता-सप्तशतीप्रभृतीनामावृत्तिश्च मां नितरां समाकर्षन्। मदीय-भवनान्तर्गत-संस्कृतविद्यानिलये कुलपरम्पराक्रमेण पितृदेवेन शास्त्राध्यापनं रामायण-महाभारत-पुराण-महाकाव्यादीनां व्याख्यानानि च सर्वेषामुल्लासकराणि बभूवुः। किञ्च तातपादः संगीतानां नाट्यानां च नितरां रसग्राही बभूव। परिसमाप्ते नित्यपाठश्रवणे केचिच्छात्रास्तदादिष्टाः संगीतकैः सर्वान् समानन्दयामासुः। सन्निहिते शिवमन्दिरप्राङ्गणेऽपराह्णवेलायां पल्लीनाट्यगोष्ठीनामभिनयप्रस्तुतिषु चासीदसौ परमोत्साहदाता। विशेषतस्तदासीन्मे निरन्तरस्नेहदाता शुभबुद्धिप्रेरयिता च परमस्नेहमयः पितृकल्पो महागुरुर्वर्त्तमाने काशीप्रवासी मूर्त्त-ब्राह्मण्यधर्मस्तपोनिरतः स्वजनवत्सलः श्रीयुक्त-ज्योतिषचन्द्र-काव्यसांख्यतीर्थ-

विद्यावाचस्पतिमहोदयः, योऽनुदिनं पथिपर्यटनकाले नक्तञ्चाहारान्ते मां नाना-मधुर-पौराणिकाख्यायिकाश्रावणेन नितरां परितोषयामास ।

एभिः प्रभाविते मे तरुणमानसे संस्कृत-साहित्यानुरागः समजनि । तेन संस्कृतकवितावरचने संस्कृत नाट्य-प्रणयनपूर्वकं तदभिनय-प्रयोगार्थं च मनसि मम परिकल्पना संवभूव । ततश्च परिसमाप्तविद्यश्चट्टलसंस्कृत-महाविद्यालयेऽध्यापकजीवनं प्रविष्ट एव महाविद्यालयाध्यक्षप्रवरेण मदीयज्येष्ठतात-पादेन महामहाध्यापक-रजनीकान्त-साहित्याचार्यमहोपाध्यायेन कृपया प्रोत्-साहितोऽहं वाञ्छितसाधने समुद्युक्तः ।

प्रथमतस्तत्रैव कृष्णार्जुनाख्यरूपकप्रयोगे मया श्रीकृष्णस्य भूमिका परिगृहीता । ततश्च क्रमादन्यत्र मञ्चेषु शान्तनु-काशीराज-मलहरराओ-जह्नुजीसिन्धिया-द्रोणाचार्य-प्रभृतीणां भूमिकासु कदाचिद् वङ्गभाषया, क्वचिच्च संस्कृतभाषया नाट्यार्थमवतीर्णः । तेनाहं संस्कृतनाट्यप्रणयणे तत्प्रयोगेषु च नितरां संप्रवृत्तः । एतन्नाटकं हि मम सारस्वतसाधन-कल्पलतिकायाः प्रसूतमेकतरं काव्यकुसुमम् । तेनाहं ब्रह्मभारतीमर्चयामि ।

**प्रयोगाः—**

मत्प्रणीतानि संस्कृतनाटकानि वहुषु विद्यायतनेषु तथा विभिन्न-सांस्कृतिक-प्रतिष्ठानेषु चाभिनीतानि । एषु चट्टलसंस्कृतमहाविद्यालय—पूर्ववङ्ग-महाकाली-वालिकोच्चविद्यालय—वरिशाल-भोला-राष्ट्रियोच्चविद्यालय—पश्चिमवङ्ग हुगली-राष्ट्रियोच्चमाध्यमिक विद्यालय—हुगली-वालिकोच्चमाध्यमिकविद्यालय—गोवरडाङ्गा हिन्दुमहाविद्यालय—नैहाटि-उच्चमाध्यमिक-वालिकाविद्यामन्दिर—हुगली संस्कृतपरिषत्-प्रभृतीणां नामान्युल्लेखयोग्यानि ।

परमेतन्नाटकानां संक्षिप्तसंस्करणाणि "कलिकाताकाशवाणी" प्रतिष्ठानात् सम्प्रचारितानि ।

ततश्च मञ्चेषु प्रयोगार्थं कतिपयैः प्रतिष्ठानाध्यक्षैरेतन्नाटकानि तेषां सकाशे प्रेरणार्थमनुरुद्धोऽपि तत्प्रेषणेऽहमक्षमोऽभवम् । अर्थसंगतेरभावाद् ग्रन्थाणां मुद्रापणे मेऽसामर्थ्यमेव तत्-कारणम् । ततश्च पश्चिमवङ्ग-

शिक्षाधिकारसेवातो विश्रान्तस्य प्रौढतामुपनीतस्य भग्नस्वास्थ्यस्य च ममेयं ग्रन्थ-प्रकाशचेष्टा देशवासिनां सेवनाय संस्कृतसाहित्यप्रचारेण भारतसंस्कृतेर्महिम-समर्चनाय च भवति। न जाने, अकिञ्चनस्येदं क्षुद्रं सारस्वतव्रतसाधनं कियतीं सफलतामाप्स्यतीति। गुरूणामाशीर्वाद एव मे सम्बलम्।

**नाटकस्य मर्मकथा—**

चाणक्यविजयमिति नाटकमैतिहासिकदृश्यकाव्यम्। ब्राह्मण्यसाधनया परिपोषिता ब्रह्मशक्तिपरिवृता च क्षात्त्रशक्तिर्महत् कल्याणं साधयतीति नाटकस्य मर्मगतो भावः। भारतीया साधना न केवलमात्ममोक्षाय, अपि तु विश्वहिताय राष्ट्रस्य च सुसमृद्धये भवति। एतद्देवयजनभूमौ ऋषीणामध्यात्मसाधना प्रयोजनानुरोधेन कल्याणकरीं बलिष्ठां राजनीतिं परिगृह्य नेतृत्वं करोति; समृद्धराष्ट्रं संस्थापयति; कालोचितां मङ्गलकरीं राजशक्तिं प्रवर्त्तयति; बल-दर्पिण ऐश्वर्यमदमत्ततां च निरस्य शान्तिमयीं सुनीतिं धर्मञ्च संस्थाप्य पुनः स्वकीयां तपोवृत्तिमाश्रयत इति गीतोक्तनीतिरेव चाणक्यचरित्रे प्रस्फुटति। विद्यातपोनिरतोऽपि महातेजा महाप्रतापोऽपूर्वनीतिविशारदश्चाणक्यो निर्लोभो भोगेष्वनासक्त आश्रितवत्सलः प्रजावान्धवश्च। तेजसा सार्द्धं स्नेहस्यापूर्व-समन्वयो, बहिः काठिन्येऽपि अन्तःप्रेमविलसितस्य कुशाग्रबुद्धेरस्य महात्मनः सर्वतोमुखीं कुशलतां शुभबुद्धिं च प्रकाशयति।

वशिष्ठेन यथा रामचन्द्रः, श्रीकृष्णविदुरभीष्मादिभिर्यथा युधिष्ठिरो, महात्मना रामदासेन च सह यथाच्छत्रपतिः शिवजिमहाराजस्तथैव कौटिल्य-दीप्त्या विलसति वीरवरो मौर्यचन्द्रगुप्तः। वैरिणे नास्ति विश्वासः, अधर्मेण न भवति सन्धिः, पापे नास्ति क्षमा, क्षत्रियाणामरिशेषश्च नैव उपेक्षणीयः— इत्यादीनि चाणक्य-चरित्राच्छिक्षणीयानि। खण्डच्छिन्न-विक्षिप्त-विभ्रान्त-भारतवर्षस्य संहतिविधाने तथाखण्डधर्मराज्यसंस्थापने च चाणक्यचरित्रमनुधाव-नीयम्। दुरवगाहमनासक्तिविमलं, सामर्थ्येऽपि वैराग्यस्निग्धं, कारुण्यवीर-धर्मसमलङ्कृतमेतत् कौटिल्यचरितमतुलनीयं सुदुर्लभञ्च। अध्यात्मतपः-समाश्रितं हि भारतवर्षम्। तच्च क्षात्त्रधर्म्मसंनद्धं सुदृढमजेयं च भवेत्। मिथ्या-

नतिं, परकैतवेषु दुष्टेषु चात्मसमर्पणं सम्यक् परिहरेत् सुप्रतिष्ठा राजशक्तिः। अतस्तपसा श्रीविमण्डितो वीरधर्मो भारतवर्षे सुचिरं विजयतां महिमबलेन।

तन्मङ्गलनीतिवार्त्तावहं बृहस्पतिशुक्राचार्यप्रतिमं ब्राह्मण्यक्षात्त्रधर्म-समन्वयविग्रहं जितेन्द्रियं चाणक्यमधुना सर्वे जननायका अनुस्मरन्तु। शिष्येषु स्नेहशीलमाश्रितवत्सलमन्यायप्रमर्दकं कौटिल्यं को नु न वन्देत? तेन देशप्रेम्नां मूर्तविग्रहं सन्त्यक्त-राजैश्वर्य-प्रभुत्वविलासं सुसमृद्धराज्यसंस्थापकं पश्चाच्च दण्डकमण्डलुधरं वानप्रस्थाभिगामिनं व्रतिनं विष्णुगुप्तं वयं श्रद्धया प्रणमामः, कामयामहे च मौर्यभूपालोपमवीर्यश्रियमार्य-चाणक्यस्य चरितानु-स्मरणेन।

## संगीतानि—

अत्र नाटके गीतानां सुरसौकर्य-साधनार्थमुद्गायनसौष्ठवार्थं च छन्दोबद्ध-श्लोकरीतिं परिहाय स्वभावगीतिच्छन्दः प्रवर्तितम्। तस्य च सुसाफल्यं बहुशः परीक्षितमिति मेऽभिनवसाधनस्य दोषगुणाः सुधीभिर्विचारणीयाः। किञ्च एवंविधानि मदीयनाटकान्तर्गतानि कतिपयसंस्कृतसंगीतानि भारतसर्वकार-पृष्ठपोषित - दिल्ली - साहित्य - आकादेमीप्रवर्तित- "संस्कृतप्रतिभाख्य" पुस्तिकायां जातीयसंगीतरूपेण प्रकाशितानि। एतदपि मे प्रेरणास्थानं गीतिरचनासु।

## कृतज्ञता-निवेदनम्—

नाटकस्यास्य मञ्चेषु सार्थकरूपायणे परमस्नेहास्पद-मच्छात्राणां छात्रीणां चैकान्तिक आग्रहः सानुरागाश्च प्रयत्नाश्चिरस्मरणीया अभिनन्दितव्याश्च। कतिपयानां मत्कृत-नाट्यानां प्रचारणान्माननीयान् कलिकाताकाशवाणी-कर्तृपक्षीयान् सश्रद्धकृतज्ञतां ज्ञापयामि। अभिनन्दयामि च नितरां विद्याविदग्धान् कलिकाता-संस्कृतसाहित्यपरिषत्सदस्या-स्तथा हुगलीसंस्कृत-परिषत्सदस्यवर्गं तैर्मत्कृतनाटकानां सुललिताभिनयसाफल्येन।

अन्ते च विशेषेण स्मरामि सुरगुरुप्रतिमानामशेषगुणालङ्कृतानां कलिकाता-संस्कृतमहाविद्यालय-गवेषणाविभागाध्यक्षाणां महामहोपाध्याय-श्रीमत्कालीपद-

तर्काचार्याणां तथाशेषशास्त्राचार्याणामनन्तगुणनिलयानां विश्वविद्यालयाध्यापक-पण्डितराज-श्रीश्रीजीवन्यायतीर्थमहोदयानां सोदरसुलभप्रेमानुकम्पान्वितं प्रोत्साहनं सानुरागसाहाय्यकञ्च, येषामनुकम्पया नाटकमेतत् "प्रणव-पारिजाता"ख्ये मासिकपत्रे प्रथमं प्रकाशमापादितम्। महाप्राणेभ्यस्तेभ्यो नतिपुरःसरां प्रीतिश्रद्धां कृतज्ञतां च निवेदयामि।

किञ्चास्य नाटकस्य प्रकाशनेन यो हि नितरां मुदमलप्स्यत, मदीयाग्रजकल्प-मनोज्ञचरिताशेषशास्त्राचार्यस्य हुगली-संस्कृतपरिषदध्यक्ष-स्वर्गत-सतीनाथ-पञ्चतीर्थविद्याविभूषणमहोदयस्य तस्य विदेहमपापविद्धममरात्मानं श्रद्धया नमामि।

ग्रन्थस्यास्य प्रकाशनविधौ सीतारामवेदमहाविद्यालयाध्यक्षाशेषगुणनिलयस्य श्रीरामरञ्जनकाव्यव्याकरणतीर्थ-महोदयस्य सप्रेमश्रमयुक्तां सहायतां सकृतज्ञः स्मरामि निवेदयामि च तस्मै श्रद्धाप्रीतिं हृदयस्य।

**उपसंहारः—**

ततश्चैषां ग्रन्थानां प्रणयने, प्रकाशने, प्रयोगेषु च रवीन्द्रभारती-विश्वविद्यालयाध्यापकस्य मदात्मजस्य श्रीमतो ध्यानेशनारायणचक्रवर्त्ति-साहित्य-शास्त्रिणो निरन्तरा सहायता वाञ्छितसिद्धौ प्रकामं फलदा भवतीति श्रीमतां परिपूर्णां सारस्वततपःसिद्धिं निरामयदीर्घायुःसमलङ्कृतां परमार्थसमृद्धिं च विधातृचरणे प्रार्थये।

नमः पितृभ्यो गुरुपादेभ्यश्चाचार्येभ्यो
नमः सारस्वतेभ्य स्तेषां शुभाशीः करुणालाभाय।

ॐ शिवमस्तु

रथद्वितीया निवेदनमिति दीन-ग्रन्थकारस्य
१३७३ वङ्गाब्दाः **श्रीविश्वेश्वरविद्याभूषण-काव्यतीर्थ-देवशर्म्मणः।**

# सारस्वतसाधना—स्वरचितग्रन्थार्घ्यजातम्

( *Works by the author* )

दस्युरत्नाकरम्— संस्कृतदृश्यकाव्यम्

भरतमेलनम्— ,,

वाल्मीकिसंवर्द्धनम् ,,

चाणक्यविजयम्— ,,

प्रबुद्धहिमाचलम्— ,,

उत्तर-कुरुक्षेत्रम् ,,

मातृपूजनम् ,,

काशीकोशलेशम् ,,

ओङ्कारनाथमङ्गलम् ,,

अरुणाचलकेतनम् ,,

विष्णुमाया, ,,

द्वारावती ,,

उमातपस्विनी । ,,

वनवेणुः— संस्कृतगीतिगुच्छम्

काव्यकुसुमाञ्जलिः—संस्कृत-खण्डकाव्यम्

मणिमालिका—संस्कृत-कथासाहित्यम्

गङ्गा-सुरतरङ्गिणी—संस्कृत-खण्डकाव्यम्

पद्मपुट—वङ्गभाषानिबद्ध-कवितासम्भारः

मानसी—वङ्गभाषानिबद्ध-प्रबन्धसमुच्चयः

# वन्दनम्

माता पितेति चाद्वैतो यो मूर्तौ द्वैतरूपभाक् ।
चिन्मयाय नमस्तस्मै लीलाविग्रहधारिणे ॥

# पात्रवर्गः

**पुरुषाः—**

नान्दी-स्तुतिपाठकः
सूत्रधारः
पारिपार्श्विकः
चाणक्यः
कौण्डिन्यः [ चाणक्यशिष्यः ]
नन्दराजः
अमात्यः [ नन्दराजसचिवः ]
प्रतिहारी
कोट्टपालः, सेनापतिः
दौवारिकः
मदनकः [ राजवयस्यः ]
पारिषद्वर्गः
नन्दराजानुचराः ; रक्षिणः
पथिकः
कारारक्षिणौ
बालकः [ अमात्यपुत्रः ]
चन्द्रगुप्तः [ मौर्यः ]
दौवारिकः [ राजद्वारपालः ]
चरः
सेनापतिः [ चन्द्रगुप्तस्य सेनाध्यक्षः ]
सैनिकाः
अनुचराः
घातकौ
कञ्चुकी [ चन्द्रगुप्तस्यान्तःपुरचरः ]

**स्त्रियः—**

नटी
बालिका [ चाणक्यशिष्या ]
मुरा [ चन्द्रगुप्तमाता ]
विलासवती [ नन्दराजपत्नी ]
मञ्जरिका [ प्रधाना सखी ]
माधविका [ सखी ]
सहचर्यः
पुरनार्यः ।



राष्ट्रपति भवन, नई दिल्ली-4.
RASHTRAPATI BHAVAN,
NEW DELHI-4.

June 14, 1966.

Dear Shri Visvesvar Vidyabhusan Kavyatirtha,

Thank you for your letter of the 6th of June 1966 and a copy of your book "Cāṇakya Vijayam". I appreciate that creative work is being done even now in Sanskrit language. I hope your book will have many readers.

With best wishes,

Yours sincerely,

(S. Radhakrishnan)

Shri Visvesvar Vidyabhusan Kavyatirtha,
132/5 Sarat Ghosh Garden Road,
Calcutta-31.

# शुभाशंसनम्

## कविप्रशस्तिः

कलिकाता राष्ट्रियसंस्कृतमहाविद्यालय-गवेषणाविभागाध्यक्षै

महामहोपाध्याय-श्रीकालीपदतर्काचार्यमहोदयै

विरचिता ।

ॐ हरिरोम्

आनन्दो जगतां मूलमानन्दाज्जगदेधते ।
आनन्दो जगतामेव काम्यस्तेन निरन्तरम् ।
आनन्दः स यतो हेतोः शरीरिभिरवाप्यते ।
स्वभावादेव लोकानां तत्र भूयान् समादरः ।
अतएव नवे रम्ये चाणक्यविजयाभिधे ।
देववाणीमये भूयान् नाटके नः समादरः ।
एतद् विद्याभूषणेन श्रीविश्वेश्वरशर्मणा ।
काव्यतीर्थोपनाम्नाभूद् रचितं सुरभाषया ।
प्रारम्भादन्तपर्य्यन्तं तन्मया सुसमीक्षितम् ।
कवेस्तत्र परा शक्तिः प्रतीता सुरवाङ्मये ।
सुगमापि यया भाषा सौन्दर्य्यं नात्यजत् क्वचित् ।
येषां स्वल्पमपि ज्ञानं संस्कृतेऽस्ति शरीरिणाम् ।
तेषामपि ततो भूयानानन्दः सम्भविष्यति ।
नाटकीयचरित्राणां कल्पनासु कवेरिह ।
चातुर्य्यं सुमहद् व्यक्तं येन तुष्यन्ति धीधनाः ।
सङ्गीतरचनाशैली विचित्रात्र समीक्ष्यते ।
चित्तं हरति यात्यर्थं भावभाषादिसम्पदा ।
यदा संस्कृतभाषाया रूपं नवमपेक्षितम् ।

सरलं रमणीयञ्च जनताकर्षणक्षमम् ।
तदैतत् कविमुख्येन चाणक्यविजयादिका ।
रचिता नाटकश्रेणी महार्घा प्रतिपद्यते ।
आचार्य्या हि कवेरस्य विद्ययासन् सुविश्रुताः ।
तेषां गुणसमावेशो नूनमत्र व्यजायत ।
निजवंशसमुद्भूत-महाजनगणाशिषा ।
कृतं साहायकं वाढमस्य तादृग्गुणोदये ।
आकाशवाणी-प्रमुखैः प्रतिष्ठानैर्जनप्रियैः ।
एतन्निवद्ध-नाट्यानां प्रचारोऽतिप्रशस्यते ।
अद्य संस्कृतभाषायाः प्रचाराय समन्ततः ।
चाणक्यविजयादीनामपेक्षा महती स्थिता ।
ईदृशस्य हि नाट्यस्य प्रचारे सति भूयसि ।
प्रीतिः संस्कृतभाषायां जनानां भाविनी ध्रुवम् ।
देववाणी तदा मन्ये राष्ट्रभाषापदं श्रिता ।
भाषासु गौरवं स्वीयं गन्तुमर्हेज्जनप्रिया ।
तेनास्य कविमुख्यस्य नाट्यानामीदृशां भुवि ।
सर्वत्र सम्प्रचाराय प्रयत्नः समपेक्षितः ।
परमेशप्रसादेन कविरेष निरामयः ।
सुदीर्घेणायुषा जुष्टः कृत्यकीर्त्या प्रवर्द्धताम् । इति—

तदीय गुणमुग्ध—
**श्रीकालीपदतर्काचार्य्यशर्मणः ।**
६।६।६६

विश्वविद्यालय-प्राध्यापक-पण्डितकुलतिलक-श्रीश्रीजीवन्यायतीर्थ एम्.ए.
महोदयानामभिमतम् ।

श्रीरामः शरणम्

भाटपाडा
४।६।६६

श्रीविश्वेश्वरदेवशर्मरचितं नानारसैराचितं
यच्चाणक्यजयाभिधं मधुरया गीर्वाणवाण्याश्रितम् ।
नाट्यं सुन्दरमैतिहासिकमिदं जातीयभावान्वितं
भूत्वा सर्वजनप्रियं विजयतां कीर्त्तिं कवेः कीर्त्तयत् ॥

इति—
श्रीश्रीजीवन्यायतीर्थदेवशर्मणः

**Shri Hiranmay Banerjee**
Vice-Chancellor, Rabindra Bharati University,
Calcutta.

I have read with interest the Sanskrit Drama entitled 'Cāṇakya Vjayaṃ" written by Pandit Visvesvar Vidyabhusan Kavyatirtha. Indeed it has been an enjoyable experience. This is due not only to the literary merit of the book but also certain innovations the author has adopted, which are not strictly authorised by the rules of dramaturgy prescribed in Sanskrit literature. For examples, the verses do not strictly conform to the the rules of prosody. The practice of making women and illiterate people talk in Prakrit has been done away with. The dialogues are carried on exclusively in Sanskrit. What impresses me most, however, is the style adopted by the author which combines simplicity with a fine poetic quality. It approximates the old Vaidarbhi style which was adopted by Kalidasa.

As a drama also the book to my mind, attains a high standard of excellence. As the title shows Cāṇakya is the hero and the actions and dramatic situations develop with him as the central figure. The profound respect the author entertains for this historical figure, has enabled him to impart to this character a rare dignity. He has been con-

ceived as a repository of contrary virtues who takes too high politics to unseat a mighty emperor quite against his natural inclination, to build up a welfare state.

"Cāṇakya Vijayaṃ" is a fine book. It not only testifies to the author's deep grounding in Sanskrit language but also his fine literary talents.

Rabindra Bharati — Hiranmay Banerjee

1st July, 1966

**Dr. V. Raghavan M.A., Ph. D., Padmabhusana**

Prof. of Sanskrit, University of Madras.

I have gone through the new play Cāṇakya-Vijayaṃ, written by Sri Visvesvar Vidyabhusan. It takes the old theme of Cāṇakya destroying the Nandas and establishing Candragupta on the throne. ...The treatment and the diction are both simple, the scenes are short and songs have also been introduced. The author may be congratulated on adding one more to the several plays with which he has enriched modern Sanskrit literature.

26th September, 1966 — V. Raghavan

# सूचीपत्रम्



---

# शुद्धिपत्रम्

१ पृष्ठा — नान्दीगानशेषांशे अष्टम वाक्यान्ते "नानातीर्थनगरी पुण्ये" इति योजनीयम् ।

१२ पृष्ठा — गीतशेषांशे "ररुणकनकच्छवि"रिति प्रथमतो "र"कारः सन्निवेशनीयः ।

२४ पृष्ठा — सप्तमवाक्ये "काचपात्रे गृहीत्वा **मधुरसं** पिबतीति" योजनीयम् ।

३३ पृष्ठा — सर्वशेषवाक्ये—"चाणक्यः—धिगनार्यम्" इत्यत्र "य"कारो निवेशनीयः ।

४८ पृष्ठा — चाणक्यः—रत्निवाहिन्यश्च "आक्रमितव्या" इति संशोधनीयम् ।

५८ पृष्ठा — "परिसमाप्तः षष्ठोऽङ्कः" इति वाक्यं सर्वशेषे स्थापनीयम् ।

६६ पृष्ठा — शेषांशे "चाणक्यः—सर्वेऽस्य जानन्तु" इत्यनन्तरं वक्ष्यमाण-श्लोको निवेशनीयः ।—

यथा—"नन्दे हतेऽत्र संस्थाप्य मौर्यञ्चापि नृपासने ।
पूर्णव्रतोऽस्मि सानन्दं पुनर्बध्नामि मे शिखाम् ॥"

६८ पृष्ठा — भरतवाक्यम्—श्लोकस्य द्वितीयपादे प्रथमपदे "नृपाः" इति संशोधनीयम् ।

१ पृष्ठा — अमरावत्या स्पर्धते ।

१५ पृष्ठा — पङ्कजश्रिया ।

२३ पृष्ठा — तृतीयपादान्ते 'यथद्य'स्थले "यथायम्" ।

५३ पृष्ठा — "पश्य,—पूर्वं कार्य्यप्रसङ्गेन……नन्दभूपतिः"। इत्यन्तरं ५४ पृष्ठोक्तं "तस्याहं करुणापुष्टो…कथं विरुध्यते प्रभोः"। इत्येव योजनीयम् ।

५७ पृष्ठा — "कौटिल्ये जीवति…नारीजनेषु च"-नायं श्लोको, गद्योक्तिरिति बोद्धव्यम् ।

---



अध्यापक श्री विश्वेश्वर विद्याभूषण काव्यतीर्थः

# चाणक्यविजयम्

## नाम

## नाटकम्

श्रीविश्वेश्वरविद्याभूषण-काव्यतीर्थेन विरचितम्

## प्रस्तावना

### नान्दी

जय जय भारतजननि,
महिममयि मङ्गलरूपे कनकरत्नमालिनि ।
विन्ध्यशैलस्तव मेखला
त्वं हि श्यामपर्णकुन्तला
वनप्रान्तरनीलाञ्चला त्वं हिमगिरिकिरीटिनि ॥

चुम्बति तव चरणपद्मं फेनिलपारावारः
लसति हृदि यमुना गङ्गा-नर्म्मदानीरहारः
देवयजनभूमे धन्ये
ऋषि-योगीन्द्र-तापस-कवि-वाल्मीकि-व्यासजननि ।
वीरप्रसूति-भारति जय राजमहिमशालिनि ॥

( नान्द्यन्ते सूत्रधारः प्रविशति ।

सूत्रधारः । शरदिन्दुसुन्दररुचिं हिमकुन्दसितं तरुणेन्दुशेखरम् ।
गौरीमनोहरं वन्दे नीलकण्ठं महेश्वरम् ॥

अहो, परिपूर्णेयं परिषद् गुणिगणमालिनी माहात्म्यादमरावतीं स्पर्द्धते । परिशोभन्ते चात्र काव्यकलाकुशलाः कोविदाः सहृदयाश्च सामाजिकाः ।

तथाहि—उल्लासयति वै सिन्धुं फुल्ला शारदचन्द्रिका ।
तथैते मोदयन्त्यस्मान् भृङ्गमालेव पद्मिनीम् ॥

यातु ; ( नेपथ्याभिमुखं गत्वा ) अये !

( प्रविशति नटी )

प्रविश्य नटी । आज्ञापयत्वार्य्यः ।

सूत्रधारः । भद्रे, प्रोच्यन्त्यामस्मज्जना यदभिनयसन्दर्शनार्थं समुत्सुकास्तिष्ठन्ति माननीयाः सामाजिकाः । तद् अविलम्बेनैव सर्व्वें सुसज्जिता भवन्त्विति ।

नटी । तथास्तु । एषाहं गच्छामि । ( प्रस्थानोद्यता )

सूत्रधारः । किञ्च, कथ्यतामार्य्यं पारिपार्श्विको यदहं तं द्रष्टुमिच्छामीति ।

नटी । यथाज्ञापयति भवान् । ( नेपथ्याभिमुखं गत्वा । )

माननीय पारिपार्श्विक ! एष त्वाम् आकारयत्यार्य्यः ।

( प्रस्थानं करोति । )

पारिपार्श्विकः ( नेपथ्ये ) । आगच्छामि भद्रे !

( ततः प्रविशति पारिपार्श्विकः । )

( प्रविश्य ) पारिपार्श्विकः । आर्य्य ! नमस्ते ।

( अभिवादयते । )

सूत्रधारः । स्वस्ति स्वस्ति । आर्य्य पारिपार्श्विक ! श्रूयताम् ।

इमे विद्वज्जना मान्या रसज्ञाः काव्यकोविदाः ।
चकोरा इव संप्राप्ताश्चन्द्रिकामृतपायिनः ॥

पारिपार्श्विकः । साधु साधु । तत् कथ्यताम् कृपया किमस्माभिः करणीयमिति ।

सूत्रधारः । श्रूयताम् । स्वाधीनमिदं भारतवर्षम् । तदेतेषां मान्यजनानां सम्माननार्थं भारतसंस्कृतेस्तथा भारतवर्षस्य महिमपूजनार्थं रसमञ्जुलं संस्कृतनाटकमद्याभिनेतव्यम् ।

पारिपार्श्विकः । ( सहर्षम् ) युक्तमेतत् । यतो निखिलरसभाण्डागारं हि विशालः संस्कृतसाहित्यसागरः । भारतीयानां हृदयग्रन्थिश्चैषा संस्कृतभाषाऽशेषगुणसम्पदा विश्वसाहित्येष्वतुलनीयं स्थानमापद्यते । तदस्याः सुधानिष्यन्देन विबुधानाराधयामः ।

सूत्रधारः । साधु साधु ।

छन्दोऽलङ्कारसंवद्धा देवभाषा सनातनी ।
विनोदयति चेतांसि रसिकानां सुधाद्रवैः ॥

पारिपार्श्विकः । अहो धन्या वयम् ।

यतः,—गुणिनां गुणसंवेत्ता गुणग्राहिजनश्चिरम् ।
अतो विजयतां नित्यं भारते सुरभारती ॥

यातु,—एतन्नाटकप्रणेतुः परिचयं विज्ञातुमिच्छामि ।

सूत्रधारः । शृणु तावत्—

सुश्यामा घननीलशैलशिखरा स्निग्धा सरिन्मालिनी
रम्या काननकुन्तला किशलयैश्चारक्तचेलाञ्चला ।
लक्ष्मीर्मूर्त्तिमतीव सागरजलात् स्नातोत्थिता चट्टला
वालार्केन्दुमयूखरत्नमुकुटा नक्तन्दिवं शोभते ॥

पारिपार्श्विकः । ततस्ततः ?

सूत्रधारः । तत्रासीद्द्विप्रवर्य्यो विहितवहुतपाः श्रौतशास्त्रार्थनिष्ठः
श्रीकालीकिङ्कराख्यः कुलपतिसदृशस्तस्य पुत्रः प्रजातः ।
शास्त्राचार्य्यः प्रसिद्धः कुलमणिरजनीकान्त इत्येव तस्य
नाम्ना श्रीकृष्णकान्तः श्रुतिविमलमतिः सोदरोऽभूद्वरेण्यः ॥

पारिपार्श्विकः । वाढ़म् । ततः किम् ?

सूत्रधारः । संनम्य भक्त्या गुरुपादपद्मं
वाणीं प्रणम्यामलपद्मनिष्ठाम् ।
नाट्यं चकारेदमतः सुरम्यं
विश्वेश्वरो दीनसुतस्तदीयः ॥

तद्धि सुराचार्य्यकल्पस्याशेषनीतिचूड़ामणेर्महामतेः कौटिल्यस्यानुकूल्येन मौर्य्यकुलरत्नस्य चन्द्रगुप्तस्य राज्याभिषेकमवलम्ब्य पण्डिकुलशिरोमणेश्चाणक्यस्य कारुण्यवीर्य्यमधुरमुदारावदानविषयकं चाणक्यविजयं नाम नाटकमद्याभिनेतव्यम् । तत् प्रस्तूयतां सर्व्वैः ।

पारिपार्श्विकः । शोभनमेतत् । यतः—

कौटिल्यबुद्ध्या परिपुष्टवीर्यो
जघान नन्दान् किल चन्द्रगुप्तः ।
सम्प्राप्य लक्ष्मीं जयमाल्ययुक्तां
रराज राहोरिव मुक्तचन्द्रः ॥

अतो वयमधुनैव कृत्येषु समुद्यता भवामः ।

( प्रस्थानं करोति । )

सूत्रधारः । ( विचरन् ) अहो, वरणीयः खलु वीरमहिमा ।

नन्दराजग्रहग्रासाद् विमुक्तो मौर्य्यचन्द्रमाः ।
चन्द्रगुप्तो जयं लेभे कौटिल्यकरुणाश्रितः ॥

( प्रस्थानं करोति । )

इति समाप्ता प्रस्तवना ।

—o—

## प्रथमोऽङ्कः

### प्रथमं दृश्यम्

चाणक्यस्य कुटीरम्—मध्याह्नकालः

( चाणक्यः प्रविशति )

चाणक्यः । मेघाड़म्बरलुप्तकान्ति गगनं, प्रच्छन्नरत्नांशुकं
दृष्ट्वा हा प्रविलीयतेऽत्र तपनः, कृष्णे दिशां मण्डले ।
धिग् दुर्दान्तकृतान्तकल्पचरितं त्वां भो विधे निष्ठुरं
ग्रस्तो येन बलाद्धिरण्मयतनू, रक्तच्छविर्भास्करः ॥

आम् ! कथमकाण्डे मेघाड़म्बरः ? एष क्रूरग्रह इव ग्रसते प्रलयमेघो दिगन्तचुम्बिकिरणं भगवन्तमंशुमालिनम् । ( वज्रो ध्वनति ) हा हा वज्रो ध्वनति । प्रतिध्वनति

दिङ्मण्डलम्। (पुनर्वज्रध्वनिः) प्रकम्पते च वसुन्धरा। (ऊर्द्ध्वं विलोक्य) शान्तं शान्तम्। (नेपथ्याभिमुखं गत्वा।) अये!

(शिष्यः प्रविशति)

शिष्यः कौण्डिन्यः। नमोऽस्तु आचार्य्यपादाय। (प्रणमति) देव! किमादिशति भवान्?

चाणक्यः। कौण्डिन्य! आनय तावत् स्नानोपकरणम्। अभिषेकार्थं गच्छामि।

कौण्डिन्यः। देव! दृश्यते नैसर्गिको विपर्य्ययः। एष दुर्य्योगोऽशुभं सूचयति।

चाणक्यः (अट्टहासं कृत्वा।) हाः—हाः। अशुभम्? वत्स! ज्योतिःशास्त्रमधिगतोऽस्मि। एष भयङ्करोऽपि विक्षोभः परिणामे शुभाय भवति। तदलं भयेन।

कौण्डिन्यः। भगवन्, पर्य्याकुलोऽस्मि दुर्य्योगहेतुना। (वज्रो ध्वनति) सम्भवेच्च वज्रपातः (भीतिं नाटयति)।

चाणक्यः। (शिष्यं सादरं पार्श्वमानीय) मा मा भैषीः पुत्रक! एषोऽहं विष्णुगुप्तस्तिष्ठामि। ननु कौटिल्ये जीवति किमस्ति भयकारणम्?

कौण्डिन्यः। देव! अतिक्रामति मध्याह्नकालः। तदिहैव परिसमाप्यतां माध्याह्निकस्नानं सुखेन।

चाणक्यः। नहि नहि। अहं स्रोतोवाहिनीं गच्छामि।

यतः,—न प्रशाम्यति सन्तापः स्वल्पतोयाभिषेचनैः।
सन्तर्पयति चाङ्गानि गङ्गाम्बु पुण्यशीतलम्॥

त्त्वमधुना कमण्डलुवसनादीनि समानय।

कौण्डिन्यः। आनयामि तावत्। (अभ्यन्तरं गत्वा पुनरानीय ददाति) (प्रविश्य) आचार्य्य! आनीतानि स्नानोपकरणानि।

पार्श्वतोऽङ्गुलिं निर्द्दिश्य ) एषा होमोपकरणालङ्कृता च यज्ञ-वेदिका सज्जिता तिष्ठति। तत् स्नात्वाऽऽगम्यतामविलम्बेन।

( अभ्यन्तरं गच्छति )

चाणक्यः। ( प्रस्थानोद्योगं करोति)—तथास्तु।

( प्रविशति गायन्ती बालिका )

गानम्

बालिका गायति।

मनोमन्दिरे विराजसे मनोहर,
प्राणदैवत विश्वदेव दुःखहर।
हे मङ्गलमय
याचे ते पुण्यप्रेम, अस्तु जयः
दुःखदीप्तचेतसि मम
देहि करुणास्निग्धप्रेम।
अशरणे देहि शान्ति शरणं हे राजराजेश्वर।
दीन-पालन, नमो निरञ्जन जय जय सुन्दर॥

चाणक्यः। काऽसि कल्याणि! कुत आगच्छसि?

बालिका। देव! भिक्षार्थिनी बालिकाहं नन्दराज्ये निवसामि।

चाणक्यः। ( स्वगतम् ) कुसुमकोमलैषा बालिका भिक्षया जीवति! ( बालिकां प्रति ) भद्रे, नास्ति ते बान्धवः? कुत्र ते परिजनाः?

बालिका। महाभाग! नास्ति मे परिजनः। न माता, न वा जनकः। अशरणाहम् भिक्षान्नेन जीवामि।

चाणक्यः। ( स्वगतम् ) अहो! नन्दानां राज्ये किं न भवति पुष्कलं शस्यं, यदन्नं प्रार्थयते बालिका? धिगस्तु तान् नृपासदान्, ये हि प्रजा न पालयन्ति! ( बालिकां प्रति ) बालिके!

बालिका। देव!

चाणक्यः । भद्रे, तव सुकरुणं वचनं मे स्नेहस्मृतिमुद्दीपयति, आकुलयति च मां कारुण्येन । तदधुना कस्ते जीवनोपायः ?

बालिका । भिक्षैव सम्बलं देव !

चाणक्यः । धिक् ! कलङ्ककरी खलु भिक्षावृत्तिः । एषा राजन्यानामकर्म्मण्यत्वं सूचयति । ( स्वगतम् ) अहो कष्टम् ! नास्ति राज्ये शरणं प्रजानाम् । किञ्च,—

पर्ज्जन्य इव भूतानामाश्रयः पृथिवीपतिः ।
धिगस्तु तस्य राजत्वं यत्र सीदन्ति तत्प्रजाः ॥

यातु । ( बालिकां प्रति ) बालिके ! त्वमत्र तिष्ठ । पाठयिष्यामि त्वां शास्त्राणि । भवतु च भारतवर्षे पुनर्गार्गीमैत्रेयीप्रभृतीनामभ्युदयः ।

बालिका । ( पादयोः पतित्वा ) देव ! धन्यास्मि भवतोऽनुग्रहेण । किञ्च अशरणायै भवता शरणं प्रदत्तम् । तदद्यारभ्य गुरुपादपद्ममेव भवतु मे चिरमाश्रयस्थलम् ।

( प्रणमति )

चाणक्यः । स्वस्ति स्वस्ति । कुशलमस्तु । उद्भासय स्वदेशं गुणमहिम्ना ? ( शिष्यं प्रति ) कौण्डिन्य ! एषा मे शिष्यत्वमुपागता बालिका । तदस्याः सहायको भव । ( कमण्डलुवसनादिकं गृहीत्वा प्रस्थानं करोति । )

कौण्डिन्यः । आगच्छ कल्याणि ।

प्रथमेऽङ्के समाप्तं प्रथमं दृश्यम् ।



## प्रथमाङ्के

### द्वितीयं दृश्यम्

( नन्दराजस्य प्रासादश्चिन्ताकुलो नन्दराजश्च । )

नन्दराजः । निष्कण्टकं राजत्वमेव सौख्यमावहति । किन्तु, स्वार्थं मे प्रतिवाध्नति विघ्नसमुच्चयः । ( दीर्घं निःश्वस्य ) यावच्चन्द्रगुप्तस्तिष्ठति, तावत् कुतो मे शान्तिः ? ( नेपथ्याभिमुखः ) कः कोऽत्र भोः ?

( प्रतिहारी प्रविशति )

प्रतिहारी । ( प्रणम्य ) आदिशतु महाराजः ।

नन्दराजः । आकार्य्यताममात्यः ।

प्रतिहारी । यद्देव आज्ञापयति ।

( प्रणम्य निष्क्रान्तः । )

नन्दराजः । (स्वगतम्) अस्मिन् सङ्कटकाले हितार्थिनो वान्धवस्य परामर्शेन प्रयोजनम् । अतोऽमात्यो गुणसिन्धुरेव शरणम् ।

( अमात्यः प्रविशति )

अमात्यः । जयतु राजन् ।

नन्दराजः । ( उत्थाय ) स्वागतममात्यप्रवरस्य । इहोपविश्यताम् ।

अमात्यः । एष उपविशामि । अपि कुशलम् ( उभावुपविशतः ) भवतः ?

नन्दराजः । आर्य्य, महती चिन्ता मां पीड़यति । मौर्य्यश्चन्द्रगुप्तो मे भवति क्लेशकारणम् ।

अमात्यः । अथ किम् ? क्षुद्रोऽपि शत्रुरनर्थमुत्पादयति । यतो, रिपुर्हि कण्टकमिव नृपाणाम् ।

नन्दराजः । तेन,

न हि भवति सौख्यं मे भद्रञ्च न हि दृश्यते ।
मर्म्माभिघातनोन्मुखो यावन्मौर्य्योऽत्र तिष्ठति ॥

अमात्यः । अथ कीदृशमाचरति मौर्य्यः ?

नन्दराजः । स हि पैतृकसम्पर्कसूत्राद् राज्यभागं कामयमानो विवादाय प्रचेष्टते । तेनासौ सुगुप्तं मम विरुद्धं प्रचारयति, येन प्रजा मे प्रतिकूलतां गच्छन्ति ।

अमात्यः । राजन्,

कदली-क्षीरदानेन पोषितोऽपि भुजङ्गमः ।
दशति प्राणदातारं न करोति विचारणाम् ॥

नन्दराजः । देव ! तदधुना को हि प्रतीकारः ?

अमात्यः । कारागारे शत्रोर्निक्षेपणं तस्य प्राणनाशनं वा प्रतीकाराय कल्पते ।

नन्दराजः । आर्य्य ! यदि चन्द्रगुप्तस्य प्राणनाशं विदधामि, तदा लोकेषु मम कलङ्को भविष्यति, भवेच्च जनानां विक्षोभः ।

अमात्यः । उत्तमम् । तर्हि निरीक्ष्यन्तां सुनिभृतं चारयोगेन तस्याचरितानि । पश्चाद्दृष्टे च दोषे कारागारे निक्षिप्यताम् ।

नन्दराजः । उत्तमः प्रस्तावः । तदेवं करिष्यामि । (नेपथ्याभिमुखः) भोः ?

प्रविश्य प्रतिहारी । आदिशतु महाराजः ।

नन्दराजः । आहूयतामविलम्बेन पुरकोट्टपालश्चण्डभट्टः ।

प्रतिहारी । यथा भवानाज्ञापयति ।

(निष्क्रान्तः)

(प्रविशति सानुचरश्चण्डभट्टः)

कोट्टपालः । विजयतां महीपालः ।

नन्दराजः । स्वस्ति । पुरकोट्टपाल ! चण्डभट्ट ! मौर्य्यश्चन्द्रगुप्तोऽस्मत्प्रतिकूलमाचरति । तत्, सुगोपनं निरीक्ष्यन्तां तस्याचरितानि । पश्चाद् यद् विधेयं तद् ज्ञापयिष्यामि ।

कोट्टपालः । परिगृहीतं महाराजस्यानुशासनम् ।

(प्रस्थानोद्यतः)

नन्दराजः । शृणु, नगरद्वारेषु स्थाप्यतां विचक्षणः प्रहरिवर्गो, येनासौ पुरान्न निर्गच्छति ।

कोट्टपालः । यथाज्ञापयति देवः ।

( निष्क्रान्तः )

नन्दराजः । विहितः प्रथमः कल्पः । ततश्च यथोचितं विधातव्यम् । ( अमात्यं प्रति ) आर्य्य, उपदेशं ते पालयामि ।

अमात्यः । साधु । वाञ्छितं सिद्धमस्तु प्राकाम्येन । अहं तव हितार्थे आत्मानं नियोजयामि ।

नन्दराजः । जयत्वार्य्यः ।

( नेपथ्ये सभाभङ्गसूचकं वाद्यं ध्वनति )

समाप्तं प्रथमेऽङ्के द्वितीयं दृश्यम् ।

—०—

प्रथमाङ्के

तृतीयं दृश्यम्

कुसुमपुरम्—चन्द्रगुप्तभवनकक्षम् ।

चन्द्रगुप्तः प्रविशति ।

चन्द्रगुप्तः । दुःखकरं खलु पराधीनजीवितम् । अत्र शान्तिं न पश्यामि ।

( चन्द्रगुप्तजननी मुरा प्रविशति )

मुरा । वत्स चन्द्रगुप्त !

चन्द्रगुप्तः । मातः !

मुरा । तात ! कथं त्वां चिन्ताकुलं पश्यामि ? एहि, उपविश । ( स्वयमुपविशति चन्द्रगुप्तञ्चोपवेशयति । )

चन्द्रगुप्तः । देवि ! अस्माकं सौभाग्यचन्द्रमा राहुणा ग्रस्यते ।

मुरा । शान्तं पापम् । वत्स, मैवं ब्रूहि ।

चन्द्रगुप्तः । जननि, भाग्यहीनः खलु तव पुत्रः । अहं दुःखाय सञ्जातः ।

मुरा । तात ! नाहं जानामि वृत्तान्तम् । कथय, किं ते दुःख-कारणम् ?

चन्द्रगुप्तः । अम्ब ! निष्करुणोऽस्मासु दृश्यते नन्दराजः । संशयाकुलश्च सोऽस्मत्प्रणयं परित्यजति ।

मुरा । वत्स ! स्वार्थो दोषदुष्टोऽनर्थमुत्पादयति । विशेषतः कुटिला राजनीतिः फणिनीव विषोद्गारिणी स्वार्थानुरोधात् स्नेहबन्धं परिहरति ।

चन्द्रगुप्तः । किन्तु, आबाल्यपोषितोऽनुरागः कथमुन्मूल्यते नन्दराजेन ? कथं वा मयि तस्य संशयः ?

मुरा । - वत्स ! एषा हि राज्ञां दुर्दान्ता चित्तवृत्तिर्या हि छिनत्ति लोभात् प्रणयबन्धनं हृदयस्य । तेन स्नेहत्वं ममत्वं वा सर्व्वमेव स्वार्थं भजते । तदत्र किं करिष्यसि ?

चन्द्रगुप्तः । अम्ब, राजभवनं परित्यज्य दूरं गमिष्यामि । यतः, इहाव-स्थानाद् वनवास एव श्रेयस्करः ।

मुरा । हा भाग्यम् ! तर्हि किं नु भवेदस्माकमाश्रयस्थानम् ! क्व नु शरणमभाजनानाम् ?

चन्द्रगुप्तः । मातस्तरुतलमस्तु नः शरणम् । अतो निर्ज्जनतामेवाश्रयिष्ये ।

मुरा । ( स्वगता ) अहह ! ( चन्द्रगुप्तं प्रति ) तात, तर्हि तदेवास्त्व-स्माकं शरणम् । ( सविषादं प्रस्थानं करोति । )

( नेपथ्ये काचिद् गायति गानम् )

गीतम्

शान्तिः सुधानिर्झरिणी
क्व नु विद्यते पुण्यप्रवाहिणी ।
तापदग्धमन्तरम्

क्रन्दति शून्यं निरन्तरम्
न जाने किं प्रवहति सुखशीतलमन्दाकिनी,
शान्ति-करुणावर्षिणी ॥

चन्द्रगुप्तः । (स्वगतः) अहो, केयं गायति ? तत् किमशरीरिणी शान्ति-देवता मूर्त्तिमती सङ्गीतसुधां वितरति ? यातु—अहमपि जल-विरहितो गीतिरसमाधुर्य्येणात्मानं शीतलयामि ।

(बालिका प्रविशति)

बालिका । (प्रविश्य) जयतु कुमारः ।

चन्द्रगुप्तः । आगच्छ भद्रे ! स्वागतं ते ।

बालिका । विजयतां भवान् ।

चन्द्रगुप्तः । कल्याणि, श्रावय मां सङ्गीतम् ।

(बालिका गायति ।)

बालिका । गानम्

वादय सखि मधुवीणाम्
फुल्लगीतिकुसुमलीनाम्
अपनोदय दुःखतिमिरमस्तमेतु यामिनी ।
उदेतु नवरवि—
र्वरुणकनकच्छविः
हसति प्राची स्वर्णकिरणमालिनी ॥

चन्द्रगुप्तः । अहो ! मधुवर्षिणी गीतिका ! अनया प्राशान्तं मे हृदयम् । (बालिकां प्रति) भद्रे ! कासि त्वम् ? देहि मे परिचयम् ।

बालिका । (स्वगतः) किं वा वक्ष्यामि ? (प्रकाशम्) मतिमन्नशरणाहं पथचारिणी । अस्ति मे चिरसौहार्दम् पथिभिः ।

चन्द्रगुप्तः । (निःश्वस्य) विस्मापयसि माम् ! ममापि साम्प्रतमन्धकाराच्छन्नं जीवनम् । त्वत्पन्थान एव ममापि शरणम् ।

बालिका। हन्त! कथं पन्थानस्तव शरणं भविष्यन्ति? राजपुत्रोऽसि। अतो वर्द्धस्व चिरं सुखेन।

चन्द्रगुप्तः। सुखम्? तद्धि मत्सकाशाद् विलयं गतम्। किञ्च, नास्ति मे सुखमत्र सहर्म्यवास-विलासेषु।

( नेपथ्ये ज्योतिषिवेशी चाणक्य उच्चैर्घोषयति। )

चाणक्यः। ( नेपथ्ये ) भोः, नय माम् मौर्य्यसकाशम्।

प्रविश्य ) दौवारिकः। कुमार! कश्चिज्ज्योतिषी त्वां द्रष्टुमिच्छति

चन्द्रगुप्तः। साधु। प्रवेश्यतां ब्राह्मणः।

दौवारिकः। आनयामि तावत्। ( प्रस्थितः )

चन्द्रगुप्तः। ( स्वगतम् ) दिष्ट्या ज्योतिषी सम्प्राप्तः। तदेनं भाग्यं पृच्छामि।

बालिका। कुमार! आज्ञापयतु मां गमनाय।

चन्द्रगुप्तः। नहि नहि। तिष्ठ क्षणकालम्।

( ज्योतिषि-वेशी चाणक्यः प्रविशति। )

( प्रविश्य ) चाणक्यः। जयतु मौर्य्यः।

चन्द्रगुप्तः ( उत्थाय )। स्वागतं ब्राह्मणस्य। नमस्ते देव! उपविश्यताम्।

चाणक्यः ( उपविश्य )। स्वस्ति, स्वस्ति। जयोऽस्तु।

( बालिकां प्रति सस्मितम् ) त्वामत्र पश्यामि?

बालिका। ( मृदु हसन्ती ) एष मे गीतं शृणोति कुमारः।

चाणक्यः। साधु, साधु। ( चन्द्रगुप्तं प्रति ) अपि कुशलं कुमारस्य?

चन्द्रगुप्तः। महाभाग! राजरोषे निपतितोऽहं, विडम्बितश्च भाग्य-विपर्य्ययेण।

चाणक्यः। ( चन्द्रगुप्तस्य ललाटे तीक्ष्णदृष्टिं निक्षिप्य ) कथं विपर्य्ययः? शृणु,

प्रावृड्जलधरच्छायाविमुक्तो रम्यदर्शनः।
शारदस्तपनो भाति प्रोद्भासितदिगङ्गनः॥

चन्द्रगुप्तः । भगवन् ! सत्यमेतद् भाग्यवत्सु । वयं भाग्यहीना नियतेः क्रीड़नकानि ।

चाणक्यः । कथम् ?

चन्द्रगुप्तः । नास्त्यस्माकं स्थानं नन्दराज्येषु ।

चाणक्यः । ( चन्द्रगुप्तस्य करतलं निरीक्ष्य ) वाढ़म् । एष क्रूरग्रहश्चन्द्रमभिभवति । किन्तु अस्ति ते विपर्य्ययस्यावसानम् ।

चन्द्रगुप्तः । देव ! दुर्लिखितं ललाटे मे विधिना । तत् कुतोऽस्य खण्डनम् ?

चाणक्यः । भोः, कस्तव ललाटाङ्कितां राजटीकामपहर्त्तुं शक्नोति ? ( चन्द्रगुप्तस्य ललाटेऽङ्गुलिं निर्दिश्य ) एषाऽखण्डनीया तव जयरेखा ।

वालिका । जयतु कुमारः ।

चन्द्रगुप्तः । कथ्यतां भगवन्, किं निस्तारोऽस्तीति मम भाग्यहीनस्य ।

चाणक्यः । शृणु राजपुत्र !

सुख-दुःखानि पर्य्यायादागच्छन्ति चलन्ति च ।
विलयात् पुनराभाति यामिनीमनु भास्करः ॥

चन्द्रगुप्तः । अमोघा ब्राह्मणाशीषः । तद्देव ! भवदीय-करुणास्निग्धवचसा अपगतो सन्तापः । अधुना प्राप्तवलोऽस्मि ।

चाणक्यः । नूनमचिरेणैव रिपुं जेष्यसि ।

( प्रस्थानं करोति । )

चन्द्रगुप्तः । ( उत्थाय ) नमो नमस्ते ।

( चाणक्यः प्रस्थानं करोति । )

वालिका । विजयतां कुमारः ।

( प्रस्थानं करोति । )

चन्द्रगुप्तः । भद्रमस्तु ।

। इति तृतीयं दृश्यम् ।

॥ परिसमाप्तः प्रथमोऽङ्कः ॥

## द्वितीयोऽङ्कः

### प्रथमं दृश्यम्

नन्दराजान्तःपुरम्—प्रासादकक्षे राज्ञी विलासवती पिञ्जरस्थां गृहशारिकां क्रीडयति ।

विलासवती । ( शारिकां प्रति ) वद शारिके, किं सहचरस्त्वां नादरयति ? कथय कथाम् । वद, ब्रूहि वचनम् ।

( शारिकाऽस्फुटं रौति—कु—उ । कु—उ । )

विलासवती । ( विहङ्गीं करतलमारोप्य ) शुकवधू, कथय । ब्रूहि वचनम् ।

( ततः प्रविशति सहचरी मञ्जरिका । )

मञ्जरिका । जयतु भर्तृदारिके, एषाऽहमनुसन्दधामि भवतीम् ।

विलासवती । एहि मञ्जरिके ! पश्य प्रियसखि ! नैषा लपति शारिका ।

मञ्जरिका । कथम् ? नेयमालपति विहगवधूः ?

विलासवती । अथ किम् ? मौनं तिष्ठतीयम् ।

मञ्जरिका । सखि ! मन्ये तावदियं प्रणयकोपमुपागता । तेनाभिमानिनी मौनं तिष्ठतीति ।

विलासवती । सम्यक् कथयसि । यतः प्रायशो दृश्यन्ते बहुवल्लभाः कान्तामवमन्यन्त इति ।

मञ्जरिका । शान्तं पापम् । न खल्वेतत् सम्भवति प्रियसख्या भर्त्तरि ।

विलासवती । सखि, सत्यं वदामि—न मे मनसि सुखमस्ति ?

मञ्जरिका । कथम् ?

विलासवती । सत्यं ब्रवीमि ! इदानीं न हि दृश्यते महाराजस्य तादृशोऽनुरागः ।

मञ्जरिका । सखि ! मैवं कथय । कथं पीडयस्यात्मानम् ?

विलासवती । शृणु प्रिये ! विस्मयकरमधुना नरपालस्याचरणम् । नासौ परिस्फुटमालपति, नागच्छति क्रीडोद्यानम्, न च मोदते आनन्दविलासेषु । किन्त्वनुक्षणं चिन्ताकुलः परिदृश्यते ।

मञ्जरिका। महादेवि! वयं हि चिरमन्तःपुरचारिण्यो बहिर्जगतां विषयेष्वनभिज्ञाः। तद्दुरूहराजकृत्यसमुच्चयस्य प्रकृतिं नावगच्छामः। किञ्च विचित्राणि कृत्यजातानि राजन्यानां सुखानि प्रतिबध्नन्ति।

विलासवती। (निःश्वस्य) न जाने कारणम्। किन्तु हृदयं मेऽशुभं चिन्तयति।

मञ्जरिका। अलमनिष्टचिन्तनेन। नूनं कोऽपि महत्तर-कर्म्मव्यपदेशो नरनाथं व्यावर्त्तयति। प्रतीक्ष्यताम् कालः।

विलासवती। सखि! आनय तावद् वीणाम्। अपनोदयामि मम हृदयभारम्।

मञ्जरिका। आनयामि तावत्।

(अभ्यन्तरं गच्छति।)

विलासवती। (स्वगतम्) हा नारीभाग्यम्! को नु बुध्यतेऽस्माकं हृदयम्!

(मञ्जरिका वीणामानीय समर्पयति, पार्श्वे चोपविशति।)

मञ्जरिका। गृहाण वीणां देवि! अनया प्रशमय मनसः क्षोभम्।

विलासवती। गृह्णामि तावत्। त्वमपि मोदस्वास्या मधुरझङ्कारेण।

(वीणां वादयति।)

मञ्जरिका। सखि! सुधामयीयं तन्त्रीर्भवत्या अङ्गुलिस्पर्शेन मधुधारां वर्षति।

विलासवती। (पुनर्वादनं समाप्य) इयं मे करसङ्गिनी स्नेहमयीव सहोदरा नितरामानन्दयति माम्। विस्मरामि चाहमनया सर्व्वदुःखानि।

मञ्जरिका। सत्यमेतत्। मनांसि हरति नूनमस्या मोहनो झङ्कारः। तत् प्रतीक्षस्व प्रियसखि, यावदहं पुष्पकरण्डिकामानयामि।

(प्रचलति।)

(विलासवती पुनर्वीणां वादयति। मञ्जरिका च पुष्पकरण्डिका-

मानीय पार्श्वे उपविश्यानुच्चं गीतिस्वरमनुगायन्ती माल्यं रचयति। राज्ञी विरम्य शृणोति।)

मञ्जरिका। देवि! प्रशान्तं ते हृदयम्? गृहाण मालिकाम्। (कण्ठेऽर्पयति।) अथाज्ञापय माम्।

विलासवती। सखि! चिरं जीव। सुखिनी भव। अधुना समानय मे लेखोपकरणानि।

मञ्जरिका। यदाज्ञापयति प्रियसखी।

(प्रचलति।)

(पुनश्च स्वर्णपात्रस्थं लोहितरागरसं लेखनी-लेखपत्रादिकमानीय ददाति। कथयति च) गृहाण सखि।

विलासवती। (सहर्षम्) अहो, मधुरम्! (गृह्णाति) सखि, त्वमत्र तिष्ठ। अहमपि रचयामि पत्रिकाम्।

(पत्रं लिखति।)

(मञ्जरिका राज्ञ्याः कुन्तलेषु पुष्पाणि विन्यस्यति।)

पत्रलेखनान्ते विलासवती। मञ्जरिके!

मञ्जरिका कथय सखि!

विलासवती। कथमेतद् भर्त्तुः करकमलं प्रापयामि?

मञ्जरिका। साधु। आह्वयामि राजवयस्यं मदनकम्। स हि विहितं विधास्यति।

विलासवती करतले कपोलं विन्यस्य चिन्तयति।)

विलासवती। (निःश्वस्य) न जाने भाग्यम्। यातु—इमां शुकवधूमामन्त्रये। (शारिकां प्रति) कथां वद शारिके! कथय, कुरु सुखालापम्।

(दूरान्मञ्जरिकया सह प्रविशति वयस्यो मदनकः)

मदनकः। मञ्जरिके! कथं मामाह्वयति देवी? अपि सम्भवति मेऽद्य पुरस्कारः?

मञ्जरिका। आर्य्य मदनक! महादेवी चैवात्र सर्व्वं जानाति।

मदनकः। साधु। तर्हि मोदकं प्रदास्यति मे महादेवी?

मञ्जरिका। (हसन्ती) अथ किम्! देव्या त्वं प्राकाम्येन पुरस्कृतो भविष्यसि।

मदनकः। साधु साधु। जयतु महादेवी। विजयतां देवीसहचरी मञ्जरिका।

मञ्जरिका। अलं मम जयघोषणेन। एहि तावद् देवीसकाशम्।

मदनकः। आगच्छामि। त्वमपि अग्रवर्त्तिनी भव।

(उभौ चलतः)

(राज्ञ्याः पुरतः आगम्य)

मञ्जरिका। (राज्ञीं प्रति) देवि! आगतस्तावदार्य्यो मदनकः। (मदनकं प्रति) भो राजवयस्य! अत्र देवी तिष्ठति।

मदनकः। जयोऽस्तु महादेव्याः। देवि, एषोऽहं समुपस्थितः।

विलासवती। (उत्थाय संवर्द्धयति) आर्य्य मदनक! क्लिश्यते खलु अत्रभवानस्मत्कारणेन। तत् क्षम्यतामनुकम्पाप्रयोगेण।

मदनकः। देवि! अलं विनयेन। स्नेहार्थिनः खलु वयं परिजना भवतीनां कृपां प्रार्थयामः। तत् कथ्यतां कोऽस्मासु नियोगः।

विलासवती। (मञ्जरिकाया हस्ते पत्रं समर्प्य) सखि! त्वमेव कथय।

(व्रीडां नाटयति।)

(मञ्जरिका देवीहस्तात् पत्रं गृहीत्वा मदनकस्य करेऽर्पयति।)

मञ्जरिका। आर्य्य मदनक! प्रापय्यतामेतत् कृपया यथास्थानम्।

मदनकः। (पत्रस्य वहिर्नामाङ्कं दृष्ट्वा) साधु! अचिरेणैवेदं पत्रं महाराजस्य करकमलं प्रापयामि। (राज्ञीं प्रति) देवि, अलमुत्कण्ठया। भवत्याः सुखमेव मया साधनीयम्। तदस्ति अन्या कापि वार्त्ता महाराजाय?

विलासवती। आर्य्य वयस्य! निवेदय तत्रभवतेऽस्माकं सविनयकुशलसन्देशम्।

मञ्जरिका । आर्य्य मदनक ! आर्य्य ! सर्व्वमत्र कुशलम् । किन्तु, महाराजस्यादर्शनं चिन्तयाकुलयति महादेवीम् ।

मदनकः । साधु । अविलम्बेनैव सर्व्वमावेदयिष्यामि नरनाथाय । किन्तु किं ममोपह्रियते विनिमयेन ?

मञ्जरिका । भो ब्राह्मण ! यदि त्वमत्रभवत्याः सन्देशं भर्त्रे ज्ञापयसि, तदा बहुलैर्मोदकैस्त्वां परितोषयिष्यामि ।

मदनकः । ( सहर्षम् ) साधु साधु, साधयामि तावत् ।

विलासवती । आर्य्य मदनक ! गृहाणैतदङ्गुरीयकम् । प्रत्यागतश्च पुनः प्रचुरान्मोदकान् भक्षयिष्यसि ।

( अङ्गुरीयकं ददाति । )

मदनकः । ( सोल्लासं गृहीत्वा ) अहो, जयतु महादेवी, विजयतां महादेवी ।

( प्रस्थानं करोति । )

द्वितीयेऽङ्के समाप्तं प्रथमं दृश्यम् ।

—o—

## द्वितीयोऽङ्कः

### द्वितीयं दृश्यम्

( नन्दराजसभा—सामात्याः पारिषदा उपविष्टास्तिष्ठन्ति । नेपथ्ये शंखध्वनिर्नन्दराजस्य गमनं घोषयति । )

( प्रविशति नन्दराजः । )

पारिषदाः । ( उत्थाय ) जयतु जयतु नन्दराजः ।

( अमात्यस्तमभ्यर्थयति । )

नन्दराजः । ( उपविश्यामात्यं प्रति ) आर्य्य ! क्रियतामासनपरिग्रहः । ( अमात्य उपविशति । ) अधुना मौर्य्यचन्द्रगुप्तं द्रष्टुमिच्छामि ।

अमात्यः । तथास्तु । ( नेपथ्याभिमुखः ) अये !

प्रविश्य प्रतिहारी। आदिशतु देवः।

अमात्यः। भो, आनीयतां मौर्य्यचन्द्रगुप्तः।

प्रतीहारी। यद्भवन्त आज्ञापयन्ति।

(निर्गच्छति।)

(पुनश्चन्द्रगुप्तेन सार्द्धं प्रविश्य।)

इत इतः कुमार।

चन्द्रगुप्तः। विजयतां नरपालः।

नन्दराजः। (चन्द्रगुप्तं प्रति) मौर्य्यचन्द्रगुप्त! अभियोगो वर्त्तते।

चन्द्रगुप्तः। राजन्! कस्य विरुद्धेऽभियोगः?

नन्दराजः। तवैव। तवाचरणमेवाधुना विचारणीयम्।

चन्द्रगुप्तः। अहो, ममाचरणं विचारमपेक्षते? किन्तु राजन्, न मयाऽशिष्टमाचरितम्।

नन्दराजः। त्वं मम विरुद्धमाचरसि। अत्र प्रमाणमस्ति।

चन्द्रगुप्तः। राजन्! नाहमनृतं कथयामि। मन्ये, कोऽपि ममानिष्टसाधनार्थं त्वां प्ररोचयति।

नन्दराजः। शृणु। त्वं पुरजनेषु तव राज्यभागाधिकारं प्रचारयसि।

चन्द्रगुप्तः। राजन्! भवानेव जानाति, यत् पितृसम्पर्केण ममांशतोऽस्ति दायाधिकारः। नाहमधिकमिच्छामि।

नन्दराजः। (सक्रोधम्) अरे, दासीपुत्रस्त्वम्। किमसम्बद्धं प्रलपसि?

पार्षदाः। धिक् धिक्।

चन्द्रगुप्तः। विरमत पारिषदाः। (राजानं प्रति) महाराज! भ्रातृस्थानीयो भवान्। भवतां चिरस्नेहार्थी खलु चन्द्रगुप्तः। अतो मां सहोदरत्वेन गृह्णातु।

नन्दराजः। अलं प्रागल्भ्येन दुर्म्मते! (स्वगतम्) अहो विचित्रम्।

पङ्किले सलिले जातं शैवालच्छन्नकेशरम्।
कण्टकी कुसुमं हीनं स्पर्द्धते पङ्कजश्रियम्॥

हा:—हा:—हा:। वर्द्धतेऽस्य स्पर्द्धा !

चन्द्रगुप्तः। ( सरोषम् ) महाराज !

नन्दराजः। अलं साहसेन मौर्य्य ! राजद्रोही खलु त्वम्।

पार्षदाः। दण्डनीयो दण्डनीयः।

चन्द्रगुप्तः। निरस्त्रोऽहं राजन्। तेनैवैते मामवज्ञातुमुत्सहन्ते।

—( रोषं नाटयति )

नन्दराजः। एष दासीपुत्रः श्लाघां करोति। भो, न जानासि किम्—

यत्— परिणाममवज्ञाय श्लाघते यो वलीयसा।
स हि मृत्युं समाप्नोति पतङ्गो वह्निना यथा॥

चन्द्रगुप्तः। अहो ! देहि शस्त्रम्। देहि मे शस्त्रम्। नाहमतः सहिष्ये।

अमात्यः। महाराज ! विहितोऽस्य राजदण्डः।

नन्दराजः। एषोऽहं विदधामि।

( मुरा प्रविशति। )

मुरा। राजन् ! कथं दण्डविधानमात्मजनेषु ? तत् किमकरुणोऽसि ?

नन्दराजः। मौर्य्यमातः ! एषा राजसभा। कथमत्र प्रविश्य प्रलपसि ?

मुरा। राजन् ! तात !

नन्दराजः। अलं कालक्षेपेण ! कथय, किं ते वक्तव्यम् ?

मुरा। अहं ब्रवीमि, न खलु राजद्रोही चन्द्रगुप्तः। तत् क्षम्यतां मे पुत्रः।

नन्दराजः। चन्द्रगुप्तमातः ! एष मां राज्यात् समुत्खातयितुं प्रचेष्टते तव तनयः। स हि मम प्रतिकूलतामाचरति।

चन्द्रगुप्तः। न हि न हि।

नन्दराजः। तूष्णीम्भव। अहं ते जननीं कथयामि।

मुरा। ( चन्द्रगुप्तं प्रति ) विरम वत्स ! अहमेव राज्ञे निवेदयामि। ( नन्दराजं प्रति ) राजन् ! अनाथाऽहं सहायहीना मा कुरु रोषं मयि !

नन्दराजः । श्रृणु स्नेहातुरे ! मदनुगृहीतोऽपि ममाहितमाचरति तव पुत्रः । स मे विनाशाय चेष्टते । किञ्च, विरुद्धप्रचारणेन स मयि जनानां विरागत्वमुत्पादयति ।

अमात्यः । अथ किम् ? यथा गृहपोषितो भुजङ्गमो दुग्धादिना प्रतिपालितोऽपि गृहस्वामिनं दष्टुं न कुण्ठते, तथैव व्यवहरति मौर्य्यः ।

नन्दराजः । अतः सर्व्वथैष दण्डनीयः । ( मुरां प्रति ) मौर्य्यमातः ! नूनं दण्डनीयं तव पुत्रस्याचरणम् ।

मुरा । ( स्वागतम् ) हा धिक् ! किं कथयामि ? को हि मे वचनं विश्वसेत् ? ( राजानं प्रति ) कुमार ! मा निष्करुणो भव । रक्ष स्नेहार्थिनं भ्रातरम् ।

नन्दराजः । तत् किं कथयसि ?

मुरा । तात ! चिरं त्वां स्नेहेन पश्यामि ।

नन्दराजः । ( स्वगतम् ) अहो विह्वलयति मामेषा मायाजालेन ! स्निग्धं चास्या वचनं ममत्वमुद्दीपयति । किन्तु, कथमुपेक्ष्यते गृहशत्रुः ?

( अमात्यं प्रति ) आर्य्य !

अमात्यः । किं पृच्छति महाराजः ?

नन्दराजः । अत्र भवन्तं समाधानं पृच्छामि ।

अमात्यः । महाराज न हि राजनीतिः स्नेहमपेक्षते । विशेषतो दण्डार्हः खलु राष्ट्रद्रोहः । अतोऽसौ दण्डनीयः ।

नन्दराजः । साधु । ( पुरकोट्टपालं प्रति ) कोट्टपालचण्डभट्ट ! शृङ्खलयेमं समातृकं मौर्य्यचन्द्रगुप्तम् । कारागारे निक्षिप्यताञ्चैष सह जनन्या ।

( कोट्टपालश्चन्द्रगुप्तं वन्दीकृत्य नयति, मुराञ्च कारां प्रवेशयति । )

चन्द्रगुप्तः । ( गच्छन् ) असहनीयोऽसहनीयः ।

सुरा । हा विधातः ।

( चन्द्रगुप्तमनुसरति )

॥ द्वितीयाङ्के द्वितीयं दृश्यं समाप्तम् ॥

—०—

## द्वितीयाङ्के

### तृतीयं दृश्यम्

( कुसुमपुरस्थो नन्दराजकारागारः—सञ्चरति काराभ्यन्तरे चन्द्रगुप्तः । )

चन्द्रगुप्तः । हा भाग्यम् !

आसीत् सौख्यं धनजनवतो राजहर्म्ये विलासो
मानं मेऽग्र्यं विमलयशसः श्रीः प्रतिष्ठा च काम्यम् ।
तत् सर्व्वं हा चिरलयगतं स्वप्नभङ्गे यथाद्य
कारावन्धो भवति नियतिः शृंखलं भूषणं मे ॥

( कारारक्षिणौ प्रविश्य पर्य्यवेक्षमाणौ सञ्चरतः, ततश्च पार्श्वद्वये उपविशतः । )

प्रथमरक्षी । ( स्वगतम् ) नीरसमिदं कारारक्षणकार्य्यम् । प्रहरात् परं प्रहरा आगच्छन्ति । गच्छन्ति दिवसाः, ततो यामिन्यः । एवं चलति राजसेवनम् । कुतो नः प्रमोदावसरः ?

द्वितीयरक्षी । अरे मार्त्तण्डक, किं कथयसि ? आगच्छ आगच्छ । उपविश । साम्प्रतं चित्तविनोदनं करवामः ।

प्रथमरक्षी । अरे ब्रह्माण्डक, काराधिकारिकः कारागारपरिदर्शनार्थमागच्छति । कर्म्माणि व्यतिक्रमं पश्यति चेन्नास्त्यस्माकं निस्तारः ।

द्वितीयरक्षी । भो, नासौ साम्प्रतमागमिष्यति । स हि स्थानान्तरे वर्त्तत इति मया परिज्ञातम् ।

प्रथमरक्षी । (सहर्षम्) साधु साधु । तेनायं सुखावसरः ।

द्वितीयरक्षी । एहि एहि । गृहाण मादकचूर्णम् ।

(सहचराय यच्छति)

(आगत्य सादरं चूर्णं गृहीत्वा मुखे निक्षिपति)—मधुरम्, मधुरम् । भोः, मधुरं गुण्डिकासेवनमतश्च माध्वीकपानम् ।

(काचपात्रे गृहीत्वा पिबति, सहचराय ददाति, स च सेवते ।)

प्रथमरक्षी । (निद्रालुत्वं नाटयन्) अरे ब्रह्माण्डक, पश्य पश्य— उदरे मे प्रकाण्डं मार्त्तण्डं धारयामि । तेनाहं स्व—पि—मि ।

(नासिकाध्वनिं करोति)

द्वितीयरक्षी । (तन्द्राजड़ितस्वरेण) मार्त्तण्डक, किं ब्रवीषि ? पश्य, एषोऽहं नभोमण्डलमारुह्य ब्रह्माण्डं सिन्धुनीरे निक्षिपामि । तद् ब्रह्माण्डेश्वरस्य मे जयघोषणं कुरु । मम—ज—यं—घो—ष—य ।

(निद्राति)

प्रथमरक्षी । जयतु ब्रह्माण्डकः, जय ब्र—ह्मा—ण्डे—श्व—र ।

(भुवि निद्राति)

चन्द्रगुप्तः । (विलोक्य स्वगतम्) सुखिनः खल्वेते । एते हि सुष्ठु निद्रासौख्यमुपभुञ्जते ।

(मुरा कारान्तःप्रकोष्ठाच्च चन्द्रगुप्तस्य कक्षं प्रविशति ।)

मुरा । वत्स चन्द्रगुप्त !

चन्द्रगुप्तः । मातर्नन्दराजस्य प्रणयोऽधुना मे कारावन्धने परिणमति । अहो, एवंविधः परिणामः प्रागेव सूचितः ।

मुरा । वत्स ! माया कुटिला हि राजनीतिः । राज्ञां स्नेहादिकमपि राजनीतिमनुसृत्य विलसति, प्रणश्यति च कारणविशेषेण ।

चन्द्रगुप्तः । सम्यगाह भवती । एवं स्वार्थानुरोधान्निःशेषमपाकृतं वात्सल्यं नन्दराजेन, तेनासौ आवाल्यप्रणयवन्धनमनायासेन छिनत्ति ।

( नेपथ्ये वालिका गायति । )

गानम्

मोचय तमोवन्धनं चित्तदहनकारि,
जागृहि दीन भाग्यहीन, जागर्त्ति तमोहारी ।
त्यज वद्धजन मोहसुप्तिम्
वरय मङ्गलसुखमुक्तिम्
विश्वदेव आगतः पुरो भीतिभञ्जनकारी,
ध्वनति मङ्गलमुक्तिमन्त्रः पावनो मनोहारी ॥

चन्द्रगुप्तः । एष परिचित-कण्ठस्वरः । केयं गायति ?

( वालिकाया गीतिरावः क्रमान्निकटवर्त्ती भवति । )

अहो, किमशरीरिणी एषा गीतिका सन्तप्तानां तापप्रशमनाय सञ्चरति ?

मुरा । पश्यामि तावत् । ( कियद्दूरं गत्वा प्रत्यावर्त्तते ) अहो एषा कापि सुरपुरलक्ष्मीरिवाविर्भवति !

( गैरिकवेशा वालिका निःशब्दपदसञ्चारं प्रविशति कारागारं पार्श्ववर्त्ति-गुप्तद्वारेण । )

वालिका । जयति मौर्य्यमातः । विजयतां कुमारः ।

मुरा । ( अनुच्चस्वरेण ) काऽसि कल्याणि ? ( सविस्मयं निरीक्षते ) का त्वम् ?

वालिका । ( अनुच्चस्वरेण ) अलं परिचयेन मातः । परिजन इति मां जानीहि ।

चन्द्रगुप्तः । कल्याणि, कथमयं भयङ्करो व्यवसायः ? न जानासि किं वज्र-कटोरं नन्दराजशासनम् ?

वालिका। (अनुच्चस्वरेण) कुमार, उच्चैर्मा कथय। यदहं निर्दिशामि तदनुपाल्यतामविचारेण। अलं कालक्षेपेण।

चन्द्रगुप्तः। (स्वगतम्) अहो! मूर्त्तिमती करुणा! तत् किं सम्भवति मुक्तिः? (वालिकां प्रति) भद्रे, कथमेवं विपदं वरयसि मम हेतोः?

वालिका। (अनुच्चस्वरेण) मा मैवम्। तूष्णीम्भव कुमार। जागरिष्यन्ति रक्षिणः। साम्प्रतमनुगच्छ माम्। (मुरां प्रति) अम्ब, एहि।

(गमनोद्योगं करोति)

मुरा। ततः?

वालिका। अहो, अलं कालक्षेपेण।

चन्द्रगुप्तः। (मुरां प्रति) अम्ब, जटिलो मुहूर्त्तोऽयम्। तदेहि। (वालिकां प्रति) देवि, कुत्र त्वमस्मान् नयसि?

वालिका। कुमार, अलं संशयेन। इतः काराद्वारं पश्चादुद्घाटितमास्ते। तत् तूर्णं वहिर्गम्यताम्।

(वालिका अन्तर्धत्ते, समातृकाश्चन्द्रगुप्तश्चानुगच्छति।

(नेपथ्यात्) वालिका। मौर्य्य! वहिःप्रान्ते शकटं सज्जितमस्ति। तदारुह्य पलायितव्यम्।

। इति तृतीयं दृश्यम्।

॥ परिसमाप्तः द्वितीयोऽङ्कः ॥

—०—

# तृतीयोऽङ्कः

## प्रथमं दृश्यम्

नदीतटवर्त्तिनी कुशभूमिः। चाणक्यो दर्भानुन्मूलयति।

चाणक्यः। शान्तिः, शान्तिः। अधुना तावदपास्तनीलिमेयं दर्भवीथिका एषा धूसरमरुभूमिरिवाभाति प्रान्तरस्थली। विनाशं गच्छत रे दर्भाङ्कुराः! विनाशं गच्छत।

( चन्द्रगुप्तः पार्श्वतः प्रविशन् पश्यति व्यापारम्। )

चन्द्रगुप्तः। ( स्वगतम् ) कोऽयं नवघनश्यामलां वनभूमिं दर्भहीनां करोति? हन्त! सर्व्वे दर्भाङ्कुरा उन्मूलतां गताः। अहमपि राज्या-दुत्खातो नन्दनृपतिना। यातु,—पृच्छामि कारणम्।

( चाणक्यं प्रति ) भोः, किमिदमाचरसि?

चाणक्यः। अरे, पृच्छसि माम्? पश्य, पश्य—विशालं दर्भहीनं प्रान्तरं दिगन्तरेखां चुम्वति। हाः—हाः—हाः ( अट्टहास्यं करोति ) ऊर्द्ध्वं दिगन्तप्रसारी नीलिमा, अधोश्चोच्छिन्नदर्भाङ्कुरं धूसर-प्रान्तरम् प्रेतभूमिरिव हसति। अधुना दर्भमूलेषु सशर्करं तक्रं निक्षिपामि। ( तक्रधारां निक्षिपति। ) यतः, अरयः समूल-मुत्खातयितव्याः।

चन्द्रगुप्तः। ( स्वगतम् ) दुर्बोध्यमेतत् कार्य्यम्। ( चाणक्यं प्रति ) महाभाग! कथमकारणं वनस्थलीं दर्भहीनां करोषि?

चाणक्यः। भोः, न हि अकारणं किमपि करोति कौटिल्यः। दर्भानाहरतो मम कुशधारेण रक्तपातः सञ्जातः। तेन पितृश्राद्धं वाधितम्।

चन्द्रगुप्तः। कथम्?

चाणक्यः। सञ्जाते रक्तपाते क्षताशौचत्वाद्दैव-पैत्रकर्म्माणि वाध्यन्ते।

चन्द्रगुप्तः। ततस्ततः?

चाणक्यः । तस्मादहितकारिणां कुशानां विनाशं साधयामि । न चेमे पुनः प्ररोक्ष्यन्ति । अयमेव मे सङ्कल्पः ।

चन्द्रगुप्तः । ( स्वगतम् ) आश्चर्य्यम् ! अपूर्व्वमस्य तेजस्विनो वैरसाधनम् । दुर्जयश्चास्य सङ्कल्पः । ( चाणक्यं प्रति ) किन्तु महाभाग ! सुकोमलाः खल्विमे दर्भाङ्कुराः ।

चाणक्यः । अरे ! शृणु,—क्षुद्रादपि भवेत् पीड़नं सबलानाम् । पश्य—स्रवति रक्तधारा मे करपल्लवात् । व्यथते च चरणतलं दर्भाङ्कुर-क्षतेन । तेनैतान् नाशयामि ।

चन्द्रगुप्तः । अहो, वैरम् ।

चाणक्यः । अथ किम् ? न हि क्षमन्ते दुष्कृतिनं तेजस्विनः । विशेषतः सर्व्वथोन्मूलनीयो विपक्षः ।

चन्द्रगुप्तः । ( स्वगतम् ) नीतिज्ञोऽयं विचक्षणः । एवं विधेन चास्ति अस्मात् प्रयोजनम् । ( चाणक्यं प्रति ) देव ! पृच्छामि किञ्चिद् भवन्तम् ।

चाणक्यः । कथय ।

चन्द्रगुप्तः । कस्तावद् भवतां परिचयः ?

चाणक्यः । श्रूयताम् ।

अहं विद्याव्रतो धीमन् करोमि शास्त्रसाधनम् ।
कौटिल्य इति विख्यातश्चाणक्यो ब्राह्मणात्मजः ॥

चन्द्रगुप्तः । अहो, श्रुतं मया भवतो विद्यावैदग्ध्यम् ।

( चाणक्यो हसति । )

चाणक्यः । तत्, कोऽसि त्वम् ? दीयतां ते परिचयः ।

चन्द्रगुप्तः । देव !

नन्दवंशप्रसूतोऽहं मुरा मे गर्भधारिणी ।
वञ्चितो राज्यभागाच्च नन्दराजरुषा पुनः ॥

चाणक्यः। भोः, ज्ञातं मया। तद् धिक् धिगेतान् कुलपांशुलान्, ये हि अन्यायमाचरन्ति स्वजनेषु। पश्यामि; धर्म्महीनं भवति नन्दराज्यम्।

( चन्द्रगुप्तं प्रति ) अथ कस्तेऽभिलाषः ?

चन्द्रगुप्तः। देव! हृतराज्यं प्राप्तुमिच्छामि।

चाणक्यः। साधु।

तेजस्विनां वलं वीर्य्यं निस्तेजाः परिभूयते।
वीर्य्यवाँल्लभते पृथ्वीं कीर्त्तिञ्च विजयश्रियम्॥

तदध्यवसायपरो भव। प्रकाशय वीर्य्यम्।

चन्द्रगुप्तः। ( पादयोः पतित्वा ) महाभाग! अशरणोऽहं भवन्तं शरणं गच्छामि। अतः कृपया सहायो मे भवतु।

चाणक्यः। तथास्तु। गच्छ स्वस्थानम्। अहमपि त्वत्कृते नीतिशास्त्राणां प्रयोगं साधयिष्यामि।

( चाणक्यः प्रस्थानं करोति। )

( प्रविश्य ) बालिका। जयतु मौर्य्यः।

चन्द्रगुप्तः। देवि! स्वागतं ते, गृह्यतां मम सश्रद्धमभिनन्दनम्।

( मानं प्रदर्शयति। )

बालिका। विजयतां कुमारः। भाग्येन खल्वार्य्य-चाणक्यस्त्वयि प्रसीदति।

चन्द्रगुप्तः। सम्यगाह भवती। दैवेन तत्रभवान् कौटिल्यो मम हितार्थं समागतः। अधुना स्वस्थोऽस्मि तत्प्रसादेन।

बालिका। धन्योऽसि। कृतार्थोऽसि। तद् यथाकालमागमिष्यामि। अलं चिन्तया।

( प्रचलति। )

चन्द्रगुप्तः। देवि—देवि!

॥ तृतीयाङ्के प्रथमं दृश्यं समाप्तम्॥

—०—

## तृतीयाङ्के

### द्वितीयं दृश्यम्

( नन्दराजभवनम्—रक्षकाः प्रासादद्वारं रक्षन्ति। पुरतः प्रविशति पथि राजवयस्यः पथिकश्च। )

पथिकः। भो राजवयस्य, कथं त्वरयसि? कुत्र नु गम्यते?

वयस्यो मदनकः। भोः, न जानासि किं यदद्य नन्दराजस्य पितृश्राद्धदिवस इति? तत्राद्य भूरिदानेन विप्रा अर्चिता भविष्यन्ति। तेनाहं त्वरयामि।

पथिकः। अहो, भाग्यवन्तः खलु ब्राह्मणाः! ते हि सादरमामन्त्र्यन्ते, भोज्यन्ते, परितोष्यन्ते च वसनभूषणादिभिः।

वयस्यः। यथार्थं कथयसि। द्विजाः काञ्चनाशनादिना सत्कृता भवन्ति; ते हि—

पूज्यन्ते गुणिभिर्नित्यं सेव्यन्ते भुवि पार्थिवैः।
तोषिता अन्नवस्त्राद्यैर्वितरन्ति शुभाशिषम्॥

पथिकः। एवं ब्राह्मणकुले जातस्त्वं राजप्रसादेन पूर्णोदरो मोदसे, किन्तु न कोऽप्यस्माकं वार्त्तां पृच्छति।

वयस्यः। भोः, दुःखं मा कुरु। अहं ते प्रदास्यामि मोदकादीनामंशम्। अद्य समुपस्थास्यति मां दधि-दुग्ध-फल-मोदक-लड्डुकादि-मिष्टान्नसम्भारः। तस्यार्द्धं ते प्रदास्यामि।

पथिकः। साधु साधु। तर्हि झटिति गम्यताम्। अहमपि नगरद्वारे तवागमनाशया प्रतीक्षां करिष्यामि।

( पुनः पुनर्निरीक्ष्य चलति। )

वयस्यः। भोः, अलं संशयेन। गच्छ गृहम्। निश्चिन्तस्तिष्ठ।

( प्रस्थानं करोति। )

( ततः प्रविशति चाणक्यः, प्रासादं निरीक्षते च। )

चाणक्यः। (स्वगतम्) इदं नन्दराजभवनम्। मयात्रामन्त्रणं गृहीतम्। सम्भवेच्च राज्ञो मनसि धर्म्मबुद्धेरुदयः। साधु साधु। सर्व्वेषां हितमस्तु।

(द्वारान्तिकं गच्छति।)

(द्वारपालं प्रति) भोः, अहमामन्त्रितो ब्राह्मणः।

द्वारपालः। स्वागतं ब्राह्मणस्य (प्रणामं करोति), प्रविश्यताम्; क्रियताञ्चात्र आसनपरिग्रहः (कक्षस्थमासनं निर्द्दिशति।)

चाणक्यः। स्वस्ति स्वस्ति। (प्रविश्योपविश्य च) भद्र, अपि सुसम्पन्नं श्राद्धायोजनम्?

द्वारपालः। अथ किम्? यथाविधि क्रियते समुद्योगोऽमात्यप्रवरेण।

चाणक्यः। (स्वगतम्) नयनिपुणो विचक्षणस्तावदमात्यो। गुणसिन्धुरिति श्रूयते। नासौ जानाति चन्द्रगुप्तेन शार्द्धं मम स्नेहप्रसङ्गम्। तथापि प्रत्यक्षस्वरूपमस्य अद्यावगमिष्यामि। (द्वारपालं प्रति) भोः, प्रापय मां राजसमीपम्।

द्वारपालः। देव, तिष्ठ क्षणकालम्, यावदहममात्यप्रवराय निवेदयामि।

(प्रचलति)।

(अमात्यो गुणसिन्धुः प्रविशति।)

अमात्यः। नमोऽस्तु ब्राह्मणाय।

चाणक्यः। विजयताममात्यः। दिष्ट्या महाजनमत्र पश्यामि।

अमात्यः। (उपविश्य) जयतु ब्राह्मणः।

चाणक्यः। स्वस्ति। मन्ये सर्व्वत्र कुशलं वर्त्तते?

अमात्यः। अथ किम्? कुशलमूलं हि राजशक्तिः। वयञ्च-तदाज्ञापालकाः।

चाणक्यः। नहि—नहि!

राष्ट्रप्रधानः सन्मन्त्री भूपानां चिरवान्धवो भवति, क्षेत्रेषु
नीतिं प्रयोज्य स हि राज्यस्य स्थिरत्वं विदधाति।

अमात्यः । एवमस्ति । तथापि लक्ष्मीवीर्य्यमपेक्षते । यतो गुणवन्तो भूपाला एव पृथिव्या भूषणम् । यातु—विश्राम्यतामिह भवान् यावदहं राज्ञे निवेदयामि ।

( प्रस्थितः । )

चाणक्यः । साधु साधु । ( कियत्क्षणम् यापयित्वा स्वगतम् । )

आम् ! कथमयं विलम्वः ? वेला वर्द्धते ( गगनं निरीक्षते । ) अधुना कोऽपि नागच्छति । ( उत्थाय ) पश्यामि तावत् । ( कक्षे विचरति, सुनिपुणं गृहभित्तिकादिकं परीक्षते, तत्र कराघातं करोति च । )

चाणक्यः । इह भित्तिगात्रे किमपि रहस्यं विद्यते । अत्रारुणवर्णाङ्कित-स्थाने गुप्तद्वारं भवेत् । मन्त्रणाकक्षाद् वहिःप्राङ्गणे कोऽपि मृदुपदसञ्चारं करोति चेत् तत्क्षीणोऽपि शव्दः श्रुतिपथमायाति ! ( अन्यतोऽङ्गुलिं निर्द्दिश्य ) अनेन च्छिद्रपथेनान्तरालाद् वहिर्व्यापारो दृश्यते । अहो सुनिपुणञ्चैतदमात्यगुणसिन्धो-र्व्यवस्थापनं तस्य वैदग्ध्यं प्रकाशयति । यातु—( उपविशति ) ( नेपथ्ये च शङ्खध्वनिः । )

शङ्खो ध्वनति । तत् किमागच्छति नरेन्द्रः ? ( क्षणमपेक्ष्य ) नाद्यापि समायाति नन्दराजः ! न जाने, किमस्यागमनस्य विलम्वकारणम् । ( चिन्तयति । )

( नेपथ्ये ) रक्षिणः । भोः, अपसरत, अपसरत । आयाति श्रीमान्नरपालः ।

चाणक्यः । ( उत्थाय ) समागच्छति नन्दभूपतिः । न जाने कीदृशोऽस्य व्यवहारः । यातु, आमन्त्रितं ब्राह्मणं कीदृशंमभ्यर्थयते इति ज्ञास्यामि ।

( पुनः नेपथ्ये शङ्खध्वनिर्भेरीपटहादिवाद्यञ्च श्रूयते । )

अनुचराः । ( प्रविश्य ) जयतु जयतु नरपालः ।

( नन्दराजः प्रविशति )

नन्दराजः । (चाणक्यं प्रति) आर्य्य ! को भवान् ? कुत आगम्यते ?

चाणक्यः । नरपते !

विद्याव्रतोऽहं ब्राह्मणसुतश्चाणक्य इति शुभाभिधान
आमन्त्रितस्तव जनैः श्राद्धकार्य्ये चैव नियुक्तः ॥

नन्दराजः । (सविस्मयम्) आम् ? केनैवामन्त्रितो भवान् ? किं प्रमादो न भवति भवताम् ?

चाणक्यः । किमुच्यते भवता ? नाहमवगच्छामि भवद्वचनम् ।

नन्दराजः । प्रोच्यते मया न हि संप्रार्थिता भवन्तः श्राद्धार्थमिति । यत एतदर्थमस्मत्कुलपुरोहिता नियुक्तास्तिष्ठन्ति ।

चाणक्यः । अहो कष्टम् ! (चिन्तयति) किं नु खल्विदम् ?

नन्दराजः । अलं संशयेन ब्राह्मण ! न वयमन्यथा कथयामः ।

चाणक्यः । तर्हि, कथमेतत् संघटितम् ?

नन्दराजः । श्रूयतां मे वचनम् । नास्माभिरज्ञातकुलशीलाः कृत्येषु नियुज्यन्ते । अतः पुरोहितनियोगार्थं न मया केचिदादिष्टाः ।

चाणक्यः । (क्षुब्धः) रहस्यमय एष विपर्य्ययः ! आमन्त्र्य मामेते निराकुर्व्वन्ति ।

नन्दराजः । महाभाग, अहेतुकोऽयं रोषः । वयमत्र किमपि न जानीमः ।

चाणक्यः । तत् किं राजानुचरा परिहासार्थं मामामन्त्रितवन्तः ? एतद्धि नितरां ममापमानाय कल्पते !

नन्दराजः । अलं वितर्केण ब्राह्मण ! मन्ये केनापि वञ्चितोऽसि ।

चाणक्यः । मा मास्तु वाक्चातुर्य्यम् ! स्वेच्छयावमानयसि ब्राह्मणम् । पश्यामि, नरपतयो मिथ्याचारा भवन्ति । कलुषितमेतद्राज-भवनमैश्वर्य्यमदेन ।

नन्दराजः । भो विप्र, सदाचारस्त्वया लङ्घ्यते । परं रक्षणीयं नर-पतेर्गौरवम् ।

चाणक्यः । धिग् धिगनाष्टम् । एष हि त्वं मदान्धो राजधर्म्मं लङ्घयसि ।

नन्दराजः । भोः, एवमस्मान् छलयितुमागतः पुनरशोभनमाचरसि ? नूनं दण्डार्हस्तेऽमार्ज्जनीयोऽपराधः ।

चाणक्यः । असहनीयोऽसहनीयः । निपातं गच्छत मदान्धाः पापेन ।

नन्दराजः । ( कुपितः ) कः कोऽत्र भोः ?

( रक्षिणः प्रविशन्ति । )

रक्षिणः । जयतु महाराजः ।

नन्दराजः । भो, एष अशोभनमाचरति प्रवञ्चकः ।

रक्षिणः । आदिशतु देवः ।

नन्दराजः । ( स्वगतम् ) अवध्यो ब्राह्मणः । ( प्रकाशम् ) भो, बहिष्क्रियतामयं सापराधो ब्राह्मणः । एष एवास्य दण्डः ।

रक्षिणः । ( चाणक्यमुपसृत्य ) एहि ब्राह्मण । महाराजस्ते बहिष्कारमादिशति ।

चाणक्यः । ( नन्दराजं प्रति ) अहं प्रचलामि । किन्तु जानीहि नन्दराज, एवं श्रियस्त्वां चिराय परित्यजन्ति ।

( गमनोद्योगं करोति । )

नन्दराजः । त्यज राजभवनम् ।

चाणक्यः । ( रोषात् प्रचलन् ) शृणु नन्दराज ! एषोऽहं प्रतिज्ञां करोमि—

मोचयामि शिखां चेमां ज्वलन्तीं ब्रह्मतेजसा ।
सवंशे त्वयि संनष्टे ग्रन्थिष्यामि पुनश्च ताम् ॥

( वेगेन प्रस्थानं करोति । )

॥ परिसमाप्तस्तृतीयोऽङ्कः ॥

—०—

## चतुर्थोऽङ्कः

### प्रथमं दृश्यम्

( चन्द्रगुप्तस्य पल्लीभवनम् )

चन्द्रगुप्तः । ( स्वगतम् ) क्रियते कुसुमपुराक्रमणार्थमुद्योगः । कौटिल्येन तथैवाहमुपदिष्टः । किन्त्वद्यापि तस्य वार्त्तां न प्राप्नोमि ।

( मुरा प्रविशति । )

मुरा । वत्स चन्द्रगुप्त !

चन्द्रगुप्तः । एहि मातः ! उपविश ।

मुरा । ( उपविशति ) उपविशामि । किन्तु तात ! कथमाह्वयसि माम् ?

चन्द्रगुप्तः । अम्ब, कुसुमपुराभियानात् प्राक् तवाशिषं प्रार्थये । अपि सफलं भवेज्ज्योतिषिकस्याशीर्व्वचनम् ?

मुरा । वाढ़म् । अलं संशयेन । नूनं भविता ते दुःखावसानम् । भविष्यति च प्राकाम्येन तव जयलाभः ।

चन्द्रगुप्तः । ( मातरं प्रणमति ) देवि, सत्यमस्तु तव मङ्गलवचनम् । किन्तु, अद्यापि न ज्ञायते कुसुमपुरविवरणम् । न वायाति आर्य्य-चाणक्यस्य दूतः ।

( नेपथ्ये ) वालिका । बुद्धं शरणं गच्छामि, धर्म्मं शरणं गच्छामि, सङ्घं शरणं गच्छामि ।

( परिव्राजिकारूपिणी वालिका प्रविशति )

प्रविश्य वालिका । नमः सुगताय । जयतु कुमारः ।

मुरा । ( चन्द्रगुप्तं प्रति ) एषा तापसी समागच्छति ।
( वालिकां प्रति ) स्वागतं भवत्याः ।

चन्द्रगुप्तः । देवि, वन्दे भवतीम् ( श्रद्धां प्रदर्शयति ), उपविश्यताम् ।

वालिका । ( उपविश्य ) धर्म्मो वर्द्धताम् । ( आशिषमुच्चारयति ) जयोऽस्तु ।

मुरा । देवि, विपन्ना वयम् ।

वालिका । मा दुःखम् । मङ्गलमस्तु ।

चन्द्रगुप्तः । भगवति, पृच्छामि किञ्चित् । कुत आगम्यते भवत्या ?

वालिका । मतिमन्, कुसुमपुरादहमागच्छामि ।

चन्द्रगुप्तः । ( ससम्भ्रमः ) कुसुमपुरम् ? को हि तद्वृत्तान्तः ? कश्च भवत्याः परिचयः ?

वालिका । ( इतस्ततो निरीक्ष्य ) आर्य्य ! चाणक्यस्य परिजनोऽहम् । तन्नियोगात् कुसुमपुरं परिभ्रम्य त्वत्सकाशमागच्छामि ।

चन्द्रगुप्तः । ( सहर्षम् ) साधु साधु, किं हि तद्विवरणम् ?

वालिका । सर्व्वमनुकूलम् । अयमेव यथायथोऽवसरः ।

चन्द्रगुप्तः । कस्य ?

वालिका । अभियानस्य । दृश्यतामियं लिपिका, प्रेषितेयं भगवता कौटिल्येन ।

( पत्रमर्पयति चन्द्रगुप्ताय )

चन्द्रगुप्तः । ( गृहीत्वा ) अपि कुशलमार्य्य-चाणक्यस्य ?

वालिका । अथ किम् ? अधुना वाच्यतां पत्रिका ।

( चन्द्रगुप्तः पत्रमुन्मोच्य वाचयति )

चन्द्रगुप्तः । स्वस्ति श्रीमन्मौर्य्यचन्द्रगुप्ताय । आयुष्मन्, प्रेषिता मया कुसुमपुरे दूतिका । परिव्राजिकाकृपया ज्ञातश्च नगरवृत्तान्तः । इयं हि मम शिष्या तापसीवेशेन तत्र गत्वा सर्व्वाणि गुप्ततथ्यानि ज्ञातवती । अन्यच्च सर्व्वं तन्मुखादाकर्णयितव्यमिति लिखितेयं पत्री शुभाशीः-पुरःसरं हितार्थिना कौटिल्येन ।

( वालिकां प्रति ) अहो महती कृपार्य्यकौटिल्यस्य ! तत्, कल्याणि ! भवत्याहं कृतार्थीकृतः । अथ किमाह तत्रभवान् चाणक्यः ?

वालिका । शृणु । आर्य्यचाणक्यस्य नियोगेन कृतो मया लोकसंग्रहः ।

त्वया चाधुनिकशस्त्रप्रयोगेषु सुनिपुणान् सनिकान् सम्यक् शिक्षयित्वा तैः सह यथाकालमस्मत्स्थानमुपस्थातव्यमित्येव गुरोर्निर्देशः ।

चन्द्रगुप्तः । साधु । तथैव भविष्यति । सन्नद्धाश्च सैनिकाः । किन्तु कदारभ्यते जयाभियानं तद् विज्ञातुमिच्छामि ।

वालिका । कथयामि । श्रूयताम् । आगामिन्यां पूर्णिमायां भविष्यति नन्दराजधान्यां कौमुदीमहोत्सवः । तत्प्रसङ्गेन सर्व्वे नागरिका हर्षोत्फुल्ला उत्सवमनुपालयिष्यन्ति । तत्रावसरे चास्माभिः कुसुमपुराक्रमणं कर्त्तव्यम् ।

चन्द्रगुप्तः । साधु । तथैव भविष्यति । आर्य्यकौटिल्यस्य वचनमेव पालयिष्यामि । तत्, कृपया कथ्यतामसौ यदविलम्बेनैव वयं तत्रभवन्तमुपस्थास्याम इति ।

वालिका । तथास्तु ! सर्व्वं विज्ञापयिष्यामि तत्रभवन्तम् । वयमपि युष्माकमागमनप्रतीक्षया स्थास्यामः । तत् त्वया च कर्त्तव्य-साधनार्थमवहितेन भवितव्यम् ।

चन्द्रगुप्तः । साधु साधु । जयतु भवती ।

वालिका । ( दण्ड-कमण्डलू गृहीत्वा उत्तिष्ठति ). जयतु मौर्य्यः ।

( प्रस्थानं करोति, घोषयति च ) बुद्धं शरणं गच्छामि, धर्म्मं शरणं गच्छामि, सङ्घं शरणं गच्छामि ।

॥ चतुर्थेऽङ्के प्रथमं दृश्यं समाप्तम् ॥

—o—

## चतुर्थेऽङ्के

### द्वितीयं दृश्यम्

चाणक्यस्य कुटीरम्—चाणक्य-कौण्डिण्यौ

चाणक्यः । भद्र, जानासि अग्निस्फुलिङ्गस्य स्वरूपम् ?

कौण्डिण्यः । देव, अग्निर्विश्वधारको जीवनं भूतानां संहारकारणञ्च ।

चाणक्यः । तथास्ति । किञ्च, लेशमात्रोऽपि वह्निर्यथा सर्व्वतः प्रसृत्य विशालमरण्यं जनपदं वा भस्मीकरोति, तथैव नाशयिष्यति स्ववंशं नन्दानां पापजातम् ।

कौण्डिण्यः । आर्य्य, कर्म्मानुरूपं फलं लभते जनः । तथापि, प्रवलप्रतापः खलु नन्दराजः ।

चाणक्यः । ( उच्चैर्विहस्य ) को नाम संक्षुब्धजलधेरुच्छ्वासं प्रतिरोद्धुं शक्नोति ? न जानासि किं यद् वज्रकठोरोऽपि वनस्पति-र्दह्यते दावाग्निना ?

( वालिका प्रविशति । )

वालिका । किन्तु देव, विचित्रः खलु ब्राह्मण्ये प्रतिष्ठितस्य तव क्षत्रियधर्म्म-परिग्रहः ! एषोऽपूर्व्वस्त्वयि विरुद्धधर्म्मसमावेशः ।

कौण्डिण्यः । मैवम् । पश्य तावत्—

सिञ्चति सलिलं मेघो जीवानां प्राणहेतुकम् ।
तत्रैव विद्यते वह्निर्विद्युद्-वज्रभयङ्करः ॥

चाणक्यः । सम्यगाह वत्स ! लोकहितार्थं मया राजनीतिर्गृहीता, न तु लोभो वा राज्यसुखविलासोऽत्र कारणम् । विशेषतो नीति-शास्त्राणां प्रयोगफलपरीक्षणञ्च मे गौणमुद्देश्यम् ।

कौण्डिण्यः । धन्योऽसि देव ! यो हि शक्तिमानपि अनासक्तो वीरधर्म्मस्य सार्थकत्वं प्रतिपादयति । मौर्य्यचन्द्रगुप्तस्य हितसाधने तवातुलनीयो महिमा प्रकाश्यते ।

वालिका। अत्रार्य्यो मुकुटविहीनोऽपि राजदण्डधर इवातुलनीयं वीर्य्यं प्रकटयति।

चाणक्यः। शृणु कल्याणि, अशिवस्योच्छेदेन मङ्गलप्रतिष्ठैव मम काम्या। तेन चन्द्रगुप्तस्य कृते कल्याणराष्ट्रस्थापने ममायमुद्योगः।

कौण्डिण्यः। (चाणक्यमुद्दिश्य) अहो, अनलगर्भो महागिरिस्तस्यान्तस्तले च प्रवहति स्नेहनिर्झरः।

वालिका। (चाणक्यं प्रति) आर्य्य, विचित्रं भवतो हृदयम्। तस्यैवामृतरसेन परिपोषिता वयम्।

चाणक्यः। (स्नेहार्द्रकण्ठस्वरः) जाते, को नु जानाति चाणक्यहृदयम्? शृणु मे इतिकथाम्।

कौण्डिण्यः। ब्रूहि देव!

वालिका। कथय तात। पुरातनं तवेतिवृत्तमाकर्णयितुमस्माकं कौतूहलं वर्त्तते।

चाणक्यः। शृणु तावत्।

अकालजलदाच्छन्नं विशालशरदम्बरम्।
यथा शून्यं तथाभाति चाणक्यहृदयं चिरम्॥

कौण्डिण्य-वालिके। तत् कथम्?

चाणक्यः। (निःश्वस्य) आनन्दोज्ज्वलमासीन्ममैकदा जीवनप्रभातम्। किन्तु कालग्रासमापन्नेषु परिजनेषु, अकाले नाट्यभङ्ग इव मे निवृत्तः संसारः। अशरणोऽहं शास्त्रानुशीलनेन कालं नयामि।

वालिका। ततस्ततः?

चाणक्यः। ततश्च विधातुरिच्छया सञ्जातो भवतां समागमः। तेन सशिष्यः परिजनसौख्यमनुभवन् तपसा जीवनं यापयामि।

वालिका। अथ किम्? तत्परम्?

चाणक्यः। किन्तु दृष्टो व्यतिकरः। राजा प्रजापालनविमुखो विलासैः

प्रमोदते। नास्ति शरणमशरणानाम्, सर्व्वतो वञ्चनं पीड़नञ्च। एतदेव मां राजनीतिसाधने प्रेरयति।

कौण्डिण्यः। किं वास्य फलम्?

चाणक्यः। अशुभानां संहारे भविता चिरशान्तिः। भवेच्च राष्ट्रं श्रिया युक्तम्। मोदिष्यन्ते च प्रजा दारिद्र्य-दुःखविमुक्ता सुखेन।

कौण्डिण्यः। देव! जटिला राजनीतिः, दुर्ज्ञेयञ्च विधातुर्विधानम्। तेन भवति नो मनसि शङ्का।

चाणक्यः। मा भयम्, ब्राह्मणोऽहम् शमदमसाधनः। ब्रह्मण्यशक्तिरेवास्मान् रक्षिष्यति।

बालिका। तात, तात! (अधोमुखी वसनाञ्चलेन मुखमाच्छादयति।)

चाणक्यः। (सस्नेहं शिरसि पृष्ठे च करतलं विन्यस्य) जाते, सुस्थिरा भव। अलम् उद्वेगेन।

बालिका। (नेत्रे सम्मार्ज्य) देव! न पुनर्विचलिष्यामि। परिजना वयम् तव स्नेहाधीनाः। तेन त्वदीयस्नेहानुवृत्तिरेव हृदयमाकुलयति।

चाणक्यः। (सस्नेहं समीपमानीय) मैवम्। श्रीरूपासि महाशक्तेरंशभूता। तत् साधय विश्वकल्याणमात्मोत्सर्गेण।

बालिका। जयत्वार्य्यः।

॥ इति द्वितीयं दृश्यं, परिसमाप्तश्चतुर्थोऽङ्कः॥

—०—

## पञ्चमोऽङ्कः

### प्रथमं दृश्यम्

कुसुमपुरे कौमुदीमहोत्सवः—सायमन्तःपुरपुष्पवाटिकायां राज्ञ्याः सहचर्य्यो गायन्ति ।

#### गानम्

मधुयामिनी सुखदायिनी
मनोहारिणी रत्नहारा ।
वहति चलमनयानिलः, हसति माधवी सुधासारा ॥
कुसुमपुरनगरकान्ता
मोदते सुखविलासक्लान्ता ।
अभिसारिका मदविक्रान्ताश्चलन्ति पथि रत्नहारा ॥
नीलगगनतले ज्वलति दीपमाला
पुलकरसस्फीता हृदयसिन्धुवेला
नदति मधुवीणा, धरणी सुखलीला
उत्सवो दिशि दिशि रजनी मनोहरा ॥

प्रथमा सहचरी । ( द्वितीयां प्रति ) अये, कुत्रास्ते राज्येश्वरी ? क नु महादेवी ?

द्वितीया । सखि, नाद्यापि दृश्यते महादेवी । न जाने, किं कौतुकार्थ-मन्तराले तिष्ठतीति ।

तृतीया । एहि, पश्यामस्तावत् । ( कुञ्जेषु सन्धानं करोति ) राज्ञि, महादेवि, क्वासि ?

चतुर्थी । हलाः, पश्यत समन्तात् । अहमप्यनुसन्दधामि ।

( कुञ्जान्तरे सन्धानं करोति । )

चतुर्थी । ( कुञ्जे सन्धानं कृत्वा ) नैवात्र देवी । यातु, कौतुकं करवाम ।

अन्याः सर्व्वाः । तथास्तु । वयमन्तरालं गच्छामः ।

( कुञ्जेषु लुक्कायन्ते । )

प्रथमा । अहमपि माधवीकुञ्जे आत्मानं गोपायामि ।

( कुञ्जे निलीयते )

( कुञ्जेषु सर्व्वाः परस्परम् विहगकूजनमनुकुर्व्वन्ति )—कु—उ । कु—उ ।

( नेपथ्याद् वीणां वादयन्ती विलासवती सखीद्वयवेष्टिता उद्यानं प्रविशति । )

विलासवती । सहचर्य्यः ! अत्र वकुलवीथिकायामुपविशामः ।

( उपविशति, सख्यौ च पार्श्वद्वये उपविशतः । )

मञ्जरिका । अहो, सुष्ठु शोभतेऽत्र रत्नवेदिकायां महादेवी !

माधविका । अये ! अशेषमणिरत्नमण्डनापि प्रियसखी पुष्पाभरणैर्नितरां शोभते ।

मञ्जरिका । तदेनामधुना चम्पक-मल्लिकादिकुसुमैर्भूषयामः ।

( कुन्तलेषु, विभिन्नाङ्गेषु च पुष्पाणि विन्यस्यति । )

माधविका । सखि ! गृहाण वकुलमालिकाम् ( कण्ठेऽर्पयति ) इदञ्च लीलापद्मं तव करकमलमलङ्करोतु ।

( कराग्रे पद्मं समर्पयति । )

( कुञ्जेभ्योऽन्याः सर्व्वाश्च सहचर्य्यः सोल्लासमाविर्भवन्ति । )

सर्व्वाः । जयतु देवी ।

( परिवृत्य तिष्ठन्ति । )

मञ्जरिका-माधविके । मधुरम्, मधुरम् ।

सर्व्वाः । अद्य वनदेवीव शोभते प्रियसखी ।

विलासवती । वर्द्धन्ताम् सहचर्य्यः ( प्रत्यभिनन्दयति । )

( नेपथ्ये शङ्खध्वनिः । )

मञ्जरिका । मन्ये, आयाति महाराजः । ( पुनः शङ्खध्वनिः । )

विलासवती । सख्यः, संवर्ध्यतां नरेन्द्रः ।

सर्व्वाः । जयतु महादेवी । जयतु महाराजः ।

( नन्दराजो वयस्यमदनकेन सह प्रविशन् दूरादालपति ।

नन्दराजः । ( स्वगतम् ) अनर्घ्य-रत्नदीप्ताङ्गीं प्रफुल्लकमलाननाम् ।
देवीं पश्यामि वेदिस्थां यथैव भुवनश्रियम् ।

किञ्च, पश्य वयस्य—

अनिन्द्यरूपोज्ज्वलरत्नशोभां
नैसर्गिकं सन्दधतीं विलासम् ।
कराग्रलीलाकमलेन तन्वी
सञ्चारिणीयं लसतीव लक्ष्मीः ॥

तत् सखे ! त्वमथाग्रे भव । त्वामहमनुगमिष्यामि ।

मदनक । महाराजः ! किं परीक्षसे मामथवा कौतुकं करोषि वयस्येन ?

नन्दराजः । वन्धो ! नाहं करोमि परीक्षणं, न वा करोमि परिहासम् । परं नितरां स्निह्यति त्वयि देवी । तत्तस्याश्चित्तविनोदने तवैवाग्राधिकारः ।

मदनकः । अहो, वहुमानितोऽस्मि गौरवदानेन । तत् पालयिस्यामि तवादेशम् । अन्यथा न जानामि कदा वा शिरसि निपतेद् राजदण्डः ।

नन्दराजः । ( सहर्षम् ) वयस्य, निपुणोऽसि चित्तप्रमोदनेषु । ततः प्रथम-महमेव ते उपायनं प्रयच्छामि ।

( कण्ठात् स्वकीयमाल्यं यच्छति । )

मदनकः । ( सहर्षम् ) जयतु जयतु वन्धुः । किन्तु राजन्, यथाकालं प्रदातव्यो मे मोदकः । नाहं मोदकं विना तृप्यामि ।

नन्दराजः । वाढम् । वाहुल्येन भोजयिष्यामो भवन्तम् । अत आगम्य-ताम् । ( उभौ समागच्छतः )

मदनकः । साधु साधु । ( अग्रतो राज्ञीसकाशं गच्छति ) ( राज्ञीं प्रति ) महादेवि ! एते वयमुपस्थिताः

विलासवती । ( उत्थाय ) जयति वयस्यः । स्वागतमस्तु वः ।

सहचर्य्यः । जयति जयति भर्त्ता ; जयति आर्य्यवयस्यः ।

प्रविश्य नन्दराजः । जयति महादेवी ।

( राज्ञीसहिता उत्थाय ) सहचर्य्यः । विजयतां महाराजः ।

( संवर्द्धनां ज्ञापयन्ति )

नन्दराजः । ( उपविशति, परिजनाश्च तथा कुर्व्वन्ति । )

नन्दराजः । साधु साधु । सुखमस्तु सकलानाम् ।

सहचर्य्यः । जयति जयति महाराजः ।

मदनकः । अये, अत्र न कोऽपि करोति मे जयघोषणम् । ( राजानं प्रति ) राजन् ! धन्योऽसि त्वं सर्व्वैः संवर्द्धितः ।

( कौतुकं करोति )

नन्दराजः । ( करेण धृत्वा ) वयस्य ! मयि सम्वर्द्धिते तवैव भवति सम्वर्द्धनम् । यतः समप्राणा वयमेकहृदयाश्च ।

मदनकः । नहि नहि । त्वं हि सर्व्वजनमाननीयो महामहिमशाली, दण्डमुण्डविधाता च नराणाम् । अहं तु दीनवेशोऽकिञ्चनो ब्राह्मणः ।

नन्दराजः । अलं कौतुकपरिहासेन वयस्य ! तवैव सर्व्वथा जयोऽस्ति ।

मदनकः । सखे, तव मम च महदन्तरम् । त्वं हि रत्नपर्य्यङ्कभूषणादि-विलासैः प्रमोदसे, आस्वादयसि च नित्यं स्वर्णपात्रे चर्व्व्यचूष्य-लेह्यपेयान्यमृतकल्पानि द्रव्याणि, अहं तु शून्योदरो बुभुक्षानल-दग्धस्तीर्थकाक इव सर्व्वतो विचरन् महाजनानां कृपां प्रार्थयामि, न कोऽपि ददाति मे मोदकम् ।

नन्दारजः । ( विहस्य ) सखे, प्रियंवदोऽसि त्वं नर्म्मसचिव इत्थं विजयसे चिरं निजगुणमाहात्म्येन ।

विलासवती । आर्य्य मदनक ! अहमेव भवन्तं संवर्द्धयामि । तदलं खेदेन ।

मदनकः । महादेवि ! चिरानुगृहीतः खल्वेष ब्राह्मणो भवतीनामनु-कम्पया जीवति । एतद्धि महतां माहात्म्यम् ।

विलासवती । जयति जयत्यार्य्यमदनकः ।

सहचर्य्यः । विजयतामार्य्यमदनकः । जयति राजवयस्यः ।

( सहचर्य्यः प्रस्थानं कुर्व्वन्ति )

नन्दराजः । ( राज्ञीं प्रति ) देवि, अद्य कौमुदीमहोत्सवप्रसङ्गेन त्वां संवर्द्धयितुमागच्छामि । तद् गृहाणोपहारम् ।

( राज्ञाः कण्ठे स्वकीयमुक्तामाल्यमर्पयति । )

विलासवती । एतदस्तु च ते प्रणयस्य प्रतिपूजनम् ।

( स्वकीयमणिमाल्यमर्पयति । )

मदनकः । जयति महादेवी । विजयतां नरपालः ।

नन्दराजः । देवि, सम्मान्यतामेष प्रियवयस्यो वीणावादनेन ।

मदनकः । साधु साधु । मधुरम् ।

( राज्ञी वीणां वादयति—सवयस्यो नरपतिः शृणोति साग्रहम् —समाप्तञ्च वादनम् ।

नन्दराजः । देवि ! अद्य सर्व्वे नृत्यगीतादिनानन्दमनुतिष्ठन्तु । स्वच्छन्द-पानभोजनविलासैः प्रमोदन्तां च सर्व्वे नागरिकाः । तदनु-जानीहि मां साम्प्रतमुत्सवकाले नगरपर्य्यवेक्षणाय ।

( उत्तिष्ठति )

विलासवती । ( समुत्थाय ) जयति महाराजः । धन्यास्मि । भवतः प्रसादेन ।

नन्दराजः । जयति महादेवी ।

( प्रस्थानं करोति । )

मदनकः । ( राजानं प्रति ) भोः, तिष्ठ तिष्ठ । कथं द्रुतमपसरसि ? सखे, देहि मे मोदकम् देहि मोदकम् ।

( अनुगच्छति राजानम् । )

( सहचर्य्यः सोल्लासं प्रत्यावृत्य राज्ञीं परिवृत्य नृत्यन्ति । )

॥ पञ्चमेऽङ्के समाप्तं प्रथमं दृश्यम् ॥

—०—

## पञ्चमाङ्के

### द्वितीयं दृश्यम्

( कुसुमपुरप्रान्तवर्त्ति-पटमण्डपे—चन्द्रगुप्त उपविष्टस्तिष्ठति । )

( प्रविश्य ) सेनापतिः । आज्ञापयतु कुमारः ।

चन्द्रगुप्तः । प्रतीक्ष्यताम् तत्रभवतश्चाणक्यस्यागमनम् । नूनमचिरेणैवासौ समागमिष्यति ।

( चाणक्यः प्रविशति । )

चाणक्यः । जयति मौर्य्यः । एषोऽहमागच्छामि । अपि कुशलं वः ?

चन्द्रगुप्तः । आर्य्य ! वन्दे भवन्तम् ।

चाणक्यः । विजयोऽस्तु । मन्ये, सर्व्वे चास्मज्जना उपस्थिता वर्त्तन्ते ?

चन्द्रगुप्तः । अथ किम् ? अधुना वयं भवतो निर्द्देशमपेक्षमाणास्तिष्ठामः ।

सेनापतिः । देव, सर्व्वे सैनिकाः केवलं भवत आदेशं प्रतीक्षमाणाः सुसज्जितास्तिष्ठन्ति ।

चाणक्यः । उत्तमम् । सहसैव कुसुमपुराच्चर आगमिष्यति । तन्मुखात् सर्व्वं ज्ञात्वा यथाकर्त्तव्यं विधास्यते ।

( परिव्राजिकावेशिनी बालिका प्रविशति )

बालिका । नमस्त्रिरत्नाय । धर्मो विजयताम् ।

( चाणक्यं प्रणमति । )

चाणक्यः । स्वस्ति । भद्रे, अपि सफलं कृत्यजातम् ?

बालिका । बाढ़म् । देव, निर्व्विघ्नं सम्पन्नमस्मत्कृत्यम् ।

चाणक्यः । ( सहर्षम् ) मौर्य्य चन्द्रगुप्त ! किमभिजानासि परिव्राजिकाम् ?

चन्द्रगुप्तः । देव ! सुचरितेयं तव शिष्या धीमती, परहितसाधिनी सन्तापहारिणी च सन्तप्तानाम् । इयं मे कारामुक्तिहेतुः सर्व्वथा साहाय्यकरी च भवतां प्रसादेन । किञ्चातुलनीयोऽस्याः कपटवेशविन्यासः परिचितानामपि विस्मयं जनयति ।

बालिका । एतदेव वर्त्तते । ( हसति । )

चाणक्यः । (चन्द्रगुप्तं प्रति) यातु, शृणु तावत् किमेषा कथयति ।
(वालिकां प्रति) कल्याणि, कथय विवरणम् ।

वालिका देव ! दुरूहं खलु चाराणां कृत्यम् । तथापि भवतामाशीर्व्वाद-बलेन सर्व्वं सुसम्पन्नं कृत्वा आगच्छामि ।

चाणक्यः । साधु । राजानश्चारचक्षुषः । तत्त्वयैव कृत्यं सुसाध्यमिति विविच्य गूढ़कर्मणि त्वं नियोजितः, अतोऽधुनाऽख्याहि ततश्च किं वृत्तमिति ।

वालिका । श्रूयताम् । नगरप्रवेशनपथास्तथा राजभवनानां गुप्तमार्गाश्च मया सुनिपुणं परिज्ञाताः ।

चाणक्यः । साधु—साधु ।

वालिका । नन्दभूपतेः सैन्यवलं, कोशः, समरोपकरणादीनि च सम्यग् विज्ञातानि । सैनिकानामवस्थानानि तथान्यानि गूढ़-सङ्कल्पितानि यथायथं विदित्वा प्रत्यागच्छामि येनास्माकं कार्य्योद्धारो भवेत् ।

चन्द्रगुप्तः । अथ कीदृशं हि नन्दराजामात्यस्य कृतित्वमिति ज्ञातं कौतूहलं वर्त्तते ।

वालिका । विचक्षणस्तावन्नन्दामात्यो गुणसिन्धुः । स हि नितरामनुरक्तः सर्व्वथा नन्दराजस्य हिताय प्रवर्त्तते ।

चाणक्यः । (स्वगतम्)

असंशयं नीतिपराग्रगण्यः
स नन्दमन्त्री गुणवान् विधिज्ञः ।
सर्व्वार्थवेदी च गुणानुरागी
माङ्गल्यकैर्योजयते नरेन्द्रम् ॥

(प्रकाशम्) यातु, कथय ततः परम् ।

वालिका । देव ! प्रवर्त्तते साम्प्रतं नगरे कौमुदीमहोत्सवः । तेनानन्द-मुखरं कुसुमपुरं विविधसुखानुष्ठानेषु निमज्जति । सपार्षदो

नरपतिः, सपरिजनाश्च नागरिका उत्फुल्ला नृत्यगीतपान-भोजनैर्मोदन्ते।

चाणक्यः। अहो, अयमेवावसरः। तन्मौर्य्य, क्रियतां समुद्योगः।

चन्द्रगुप्तः। देव, प्रतिगृहीतं भवद्वचः। (सेनापतिं प्रति) सेनापते! अद्यैव वयं नगरं प्रवेक्ष्यामः। तदादिश्यन्तां सैनिका अभियानोद्योगाय।

सेनापतिः। जयति महाराजः। एषोऽहमभियानार्थं सर्व्वान् सज्जीकरोमि।

(प्रस्थानं करोति)

चाणक्यः। साधु। तन्मौर्य्य, अस्माभिः समन्ततो नगरं प्रविश्य झटिति दुर्गं, कोशागारं नन्दराज्यस्य रक्षिवाहिण्यश्चाक्रमितव्यानि।

चन्द्रगुप्तः। देव! त्वयि सहाये नास्त्यस्माकं किमप्यसाध्यम्। तत्त्वाशिषं शिरोधार्य्यां कृत्वा राज्योद्धारकामनया जययात्रां करवाम।

(चरणवन्दनां कृत्वा चलति।)

चाणक्यः। विजयी भव। भवतु च बाहुल्येन मनोरथसिद्धिः। (बालिकां प्रति) जाते, आनय तावन्ममाङ्गावरणम्। त्वमपि सज्जिता भव।

(बालिका नेपथ्यं गच्छति, आनीय च नीलकञ्चुकं चाणक्याय ददाति।)

बालिका। (प्रविश्य) गृह्यतामार्य्य!

चाणक्यः। साधु। अधुनात्मानं कञ्चुकेनावरिष्यामि।

(सर्व्वाङ्गमाच्छादयति) तद् विनश्यन्तु च सर्व्वे विघ्नाः।

॥ पञ्चमेऽङ्के समाप्तं द्वितीयं दृश्यम् ॥

—०—

## पञ्चमाङ्कः

### तृतीयं दृश्यम्

( नन्दराजधानी चन्द्रगुप्तेनाक्रान्ता—मुहुर्मुहुः शस्त्राघात-शब्दः कोलाहलश्च । )

नेपथ्ये चन्द्रगुप्तः । संहारः, संहारः ।

सैनिकाः । संहारः, संहारः ।

( भीता नागरिकाः कोलाहलं कुर्व्वन्ति । )

प्रविशति नन्दराजः ।

प्रविश्य नन्दराजः । हा धिक् । आक्रान्तं नगरम् । क उपायः ? क उपायः ? ( उच्चैः ) सेनापते ! सेनापते !

प्रविश्य सेनापतिः । राजन्, अतर्कितमाक्रान्ताः सैनिकाश्छिन्नाश्च व्यूह-श्रेणयः । हतावशिष्टान्यस्माकं सैन्यानि विशालां विपक्ष-वाहिनीं प्रतिरोद्धुं न शक्नुवन्ति ।

नन्दराजः । हा हा ! सर्व्वनाशः, सर्व्वनाशः । सेनापते । गच्छ गच्छ । परिचालय सैनिकान् । रक्ष दुर्गम् । सर्व्वथा रक्ष नगरम् ।

( नेपथ्ये पुनश्चन्द्रगुप्तपक्षीयानां संहाररवः । )

नन्दराजः । अहो, न वयं पराजयं वरिष्यामः । पराभवकलङ्कान्मरणं श्रेयः, न तु पराजयवरणम् ।

( नेपथ्ये नन्दसेनापतिः—भो भोः सैनिकाः रक्षत दुर्गम्, रक्षत नगरम् । नाशयत शत्रून् । )

नन्दराजः । ( उच्चैः ) नाशय मौर्य्यचन्द्रगुप्तम्—विनाशय चाणक्यम् । ( तूर्णं प्रस्थानं कुरुते । )

( प्रविशति सानुचरश्चन्द्रगुप्तः । )

चन्द्रगुप्तः । ( स्वागतम् ) अये, एष मद्विनाशार्थं स्वकीय सैनिकाना-दिशति नन्दराजः । ( उच्चैः ) मूढ़ !—न जानासि त्वं यत्

मृत्युस्त्वामभिधावतीति। (अनुचरान् प्रति) तच्चलत चलत भो वीराः, अनुसरत नन्दम्—नाशयत नन्दराजम्।

(प्रस्थानं करोति।)

अनुचराः। संहारः—संहारः।

(सोल्लासं मौर्य्यमनुगच्छन्ति।)

(पुनर्नैपथ्ये संहाररवो भीतानां कोलाहलश्च प्रविशन्ति सन्त्रस्ताः पुरनार्य्यः।)

प्रविश्य पुरनार्य्यः। (सकरुणम्) रक्ष जीवनम्, भो रक्ष जीवनम्।

(प्रविशति सानुचरश्चाणक्यः।)

चाणक्यः। (नारीगणं प्रति) अभयमभयं मातरः! अभयं भवतीनाम्।

नार्य्यः। (आर्त्तकण्ठेन) भो, रक्ष नारीजनम्। पाहि नो जीवितम्। मा मा विनाशय नारीजनान्।

चाणक्यः। अलमुत्कण्ठया जनन्यः! माऽस्तु शङ्का भवतीनाम्। यतश्चाणक्ये तिष्ठति नास्ति भयकारणमवलानाम्। (अनुचरान् प्रति) भोः, इमाः पुरललनाः ससम्मानमन्तःपुरं प्रापयत। रक्षत चैताः प्रयत्नेन।

नार्य्यः। (सोच्छ्वासं) देव,—देव!

चाणक्यः। निःशङ्कं व्रजत मातरः। अतःपरं वोऽभिमतं स्थानं प्रापयिष्यामि। न कोऽपि युष्मत्कमशुभमाचरिष्यति।

नार्य्यः। जयतु महात्मा, जीवतु देवः।

(सवारुणमवलोकयन्ति।)

अनुचराः। इत इतः अम्बाः (प्रचलन्ति, नार्य्यश्चानुगच्छन्ति।)

चाणक्यः। (उच्चैः) शृण्वन्तु सर्व्वे। यदि कोऽप्यशिष्टमाचरति मातृजनेषु, तदा शूलेन स वध्यो भवेत्।

(चन्द्रगुप्तः प्रविशति।)

चन्द्रगुप्तः। जयत्वार्य्यचाणक्यः। (उच्चैर्जनान्तिकम्) भो भोः, पालयत भगवतः कौटिल्यस्यानुशासनम्।

चाणक्यः। मौर्य्य ! आदिश्यन्तामस्मज्जना वालवृद्धातुराणां रक्षणाय तथा च सयत्नं रक्षणार्थं पुरयोषिताम्। न कोऽपि शिष्टजनं पीड़येत्।

चन्द्रगुप्तः। तथास्तु। विजयतां कौटिल्यशासनम्। एवमहं सर्व्वभावेन भवदीयां सुमङ्गलां नीतिमनुपालयामि।

॥ इति तृतीयं दृश्यम्, पञ्चमोऽङ्कः समाप्तः ॥

—०–

## षष्ठोऽङ्कः

### प्रथमं दृश्यम्

( जीर्णोद्यानम्—नेपथ्ये डिण्डिमध्वनिर्ढक्कानादश्च। )

प्रविश्य चरो घोषयति। भो भो नागरिकाः, मौर्य्यचन्द्रगुप्तो विज्ञापयति, न केनापि जीर्णोद्यानं प्रवेष्टव्यमिति।

( ढक्कां वादयति, ततश्च प्रतिष्ठते। )

( ततः प्रविशति चिन्ताकुलोऽमात्यो गुणसिन्धुः। )

अमात्यः। ( निःश्वस्य स्वगतम् )—

प्रागासं बहुमानकीर्त्तिविभवः सौभाग्यलक्ष्म्यान्वितो<br>
नन्दे दण्डधरे सुशासनविधौ संवर्द्धितः सादरम्।<br>
मानो मेऽद्य पराभवाल्लयमितो लुप्तं च वीर्य्यं मम<br>
सोऽहं श्रीरहितो विपक्षशरणं गच्छामि दैवेच्छया॥

किञ्च। धृत्वा मौलौ यदाज्ञां स्रजमिव ललितां भूपतिश्चानुरक्तो<br>
जाता धन्याश्च लोकाः प्रमुदितहृदया मङ्गलं मेऽनुचिन्त्य।<br>
सोऽहं हन्त प्रकामं प्रबलविधिरुषा बान्धवैर्हीनसङ्गो<br>
जीर्णोद्यानेऽत्र शून्ये नियतमशरणो मृत्युदण्डं प्रतीक्षे॥

( नेपथ्ये ढक्कानादः। )

पुनर्नेपथ्ये चरः। भो भो नागरिका, अपसरत अपसरत। यो हि जीवितु-मिच्छति, स दूरं गच्छतु।

( खड्गधारिणौ घातकौ प्रविशतः गच्छतश्चामात्यान्तिकम्। )

प्रथमघातकः। ( अमात्यं प्रति ) भोः पुरुष! उद्युक्तो भव। एते वयं कृतस्नानं त्वां रक्तचन्दनेनानुलिप्य जवाकुसुममाल्येन मण्डयित्वा वध्यभूमिं नयामः।

द्वितीयघातकः। स्थिरो भव।

अमात्यः। ( स्वगतम् ) हा भाग्यम्! इयमेव मे परिणतिः। सर्वेषा-मानन्दवर्द्धनं मामत्र न कोऽपि पश्यति।

धिग्माम्। एवं स्वजनविरहितोऽहं वधार्थमानीतः। तन्मरणात् पूर्व्वं न मां द्रक्ष्यति परिजनः। ( निःश्वस्य ) क नु तिष्ठति नन्दनः? न जाने? जननी च तस्य कुत्र कालं नयति।

( सोच्छ्वासम् ) नातः पश्यामि भार्य्याम्।

( करेण नेत्रे मार्ज्जयति। )

( भार्य्यामुद्दिश्य ) प्रिये, कान्ते! करिष्यसि कौटिल्याय सविनयम् पुत्रस्यात्मनश्च मुक्तिप्रार्थनम्। ततश्चात्र मा पुन र्वसतिं कुरु। चाणक्यविरहिते देश एव स्थातव्यम्।

( वाष्पं मुञ्चति। )

प्रथम घातकः। भो, अत्र निश्चलस्तिष्ठ। मा शब्दं कुरु।

द्वितीयघातकः। शब्दं मा कुरु। ( खड्गं प्रदर्श्य भाययति। )

( प्रविशति चन्द्रगुप्तेन सह चाणक्यः। )

चाणक्यः। ( घातकं प्रति ) रे रे! विरम, विरम।

( घातकौ विरम्य विस्मितौ तिष्ठतः। )

( अमात्यं प्रति ) अमात्य गुणसिन्धो, एषोऽहम् भवन्त-मभिवादये। अपि कुशलं भवतः? ( मानं प्रदर्शयति। )

अमात्यः । (स्वगतम्) हन्त ! एष हि—

मृत्युवाणं स्वयं क्षिप्त्वा पृच्छति मम मङ्गलम् ।
मृगमाहत्य शार्द्दूलो यथा क्रीड़ति तेन हि ॥

(प्रकाशम्) आर्य्य कौटिल्य ! वधार्थमानीतं मां मृत्युरपेक्षते । तन्मे कुशलप्रच्छनमुपहासाय कल्पते ।

चाणक्यः । शान्तं पापम् !

त्वं माननीयो गुणवान् सुविज्ञो
लोकानुरक्तो मतिमान् सुधीश्च ।
सुशीलविद्याकुलकीर्त्तिधन्यो
विराजसे तन्न च दण्डनीयः ॥

अतः संवर्द्धयामि भवन्तम् ।

(करौ प्रसार्य्यादरं प्रदर्शयति ।)

(चन्द्रगुप्तं प्रति) तन्मौर्य्य ! संवर्द्ध्यतामद्य माननीयो नन्दराजामात्यः ।

चन्द्रगुप्तः । जयत्यार्य्यः । (सम्मानयति ।)

चाणक्यः । शृणु नन्दराजमन्त्रिन् !

नीतिज्ञेन त्वया प्रीत्या सेवितो नन्दभूपतिः ।
अमात्येन च तत् कार्य्यं नात्र ते दोषसम्भवः ॥

अमात्यः । तर्हि कथमत्राहमानीतः ?

चाणक्यः । सुधीवर, वयं त्वां बान्धवत्वेन गृह्णीमः । तत् पूर्व्ववैरं विस्मृत्य मौर्य्यस्य बन्धुस्थाने भव ।

चन्द्रगुप्तः । (सहर्षम्) जयति जयत्यार्य्यः ।

अमात्यः । (चाणक्यं प्रति) आर्य्य कौटिल्य ! कथमेतत् सम्भवति ?

पश्य । पूर्व्वं कार्य्यप्रसङ्गेन सेवितो नन्दभूपतिः ।

तस्याहं करुणापुष्टो विरुध्यते कथं प्रभो।
अतो नाहमर्हामि परिग्रहीतुं भवतां प्रसादम् ॥

चाणक्यः। कथम् ?

अमात्यः। तेन सुहृद्द्रोहो भवति। भवति च प्रभुद्रोहपातकम्।

चन्द्रगुप्तः। कस्तावद् भवतां सुहृत्, कश्च प्रभुः ?

(अमात्यो मौनेन तिष्ठति।)

चाणक्यः। प्रभुः नन्दराजः ?

अमात्यः। अथ किम् ? तस्याहमन्नपुष्टः।

चाणक्यः। भोः, निहतः सः। साम्प्रतं वंशे तस्य नास्ति कोऽपि।

अमात्यः। अहह ! (शोकावेगं निरुध्य) तथाप्यस्ति मे प्रभुजने ऋणम्। कथमहं लोकान्तरगतस्य वान्धवस्य विरुद्धमाचरामि ?

चाणक्यः। नन्दराजमन्त्रिन् ! अलमतीतस्मरणेन। साम्प्रतं वास्तव्वं विविच्य कर्त्तव्यमनुष्ठीयताम्।

अमात्यः। देव ! (विचिन्त्य) अहं मरणं वरयामि। तच्छूलारोपण-दण्डो मया प्रार्थ्यते।

चाणक्यः। तेन को लाभः ?

अमात्यः। भवेन्मे प्रभुऋणान्निस्तारः। तदृणमुक्तिर्मया वाञ्छ्यते।

चाणक्यः। (सुगम्भीरम्) हुम्। ततः ?

अमात्यः। (वाष्परुद्धकण्ठः) ततश्चार्य्यकौटिल्य ! (विषादं नाटयति) मरणात्…मम हि मरणात् पूर्व्वम्… !

चाणक्यः। कथयतु स्वस्थचित्तः।

(कथयितुं न शक्नोति।)

अमात्यः। (आत्मानं संयम्य) वाढम्। कथयामि। अस्ति शूला-रोपणात् प्राङ्ममैका प्रार्थना। अपि पूर्य्येत याचनम् ?

चाणक्यः। अलं संशयेन। कथ्यतां स्वाच्छन्द्येन।

अमात्यः। (पुनरावेगेन) आर्य्य ! (विरमति, पुनश्च परम्) अहो

च,...यदि कृपा भवति, तदा रक्ष्यतां मे परिजनः। न हन्यतां निरपराधः समातृको मे तनयः।

( मार्ज्जयति साश्रुनयनयुगलम्। )

चाणक्यः। ( उत्थायामात्यस्य करे धृत्वा सान्त्वयति। )

चाणक्यः। अमात्य गुणसिन्धो, कथं प्रतिकूलं चिन्तयति? एष ते अभयं प्रयच्छामि। तद् विश्रब्धो भूत्वा तिष्ठ।

( चन्द्रगुप्तं प्रति ) मौर्य्य! एष शोकाकुलस्तिष्ठति स्नेह-कातरस्तावदमात्यो गुणसिन्धुः। तद् विश्राम्यतामेष यथाभिमतं शोकापनोदनाय।

( प्रस्थानं करोति। )

चन्द्रगुप्तः। ( अनुचरं प्रति ) भोः प्रापयत माननीयममात्यवर्य्यमुद्यानगृहम्। माभूदस्य कोऽपि शान्तिर्विरोधः।

( निष्क्रान्तश्चन्द्रगुप्तः। )

अनुचराः। जयति मौर्य्यराजः।

( निष्क्रान्ताः सर्व्वे। )

॥ षष्ठाङ्के समाप्तं प्रथमं दृश्यम् ॥

—०—

## षष्ठोऽङ्कः

### द्वितीयं दृश्यम्

( जीर्णोद्यानपथः—चरः शृङ्खलितं मदनकं चाणक्यसमीपं नयति। )

चरः। प्रचल प्रचल वैदेशिक!

मदनकः। भोः, कुत्र मां नयसि?

चरः। त्वां जीर्णोद्यानं नयामि।

मदनकः । (सविस्मयम्) आम्! जीर्णोद्यानम्? कीदृशं तत्? नहि नहि। भद्र, जीर्णोद्यानमहं न जानामि। अहं केवलं सुचिर-कालं नन्दराजस्य क्रीड़ोद्याने विहरामि।

चरः । भवतु तत्। साम्प्रतं जीर्णोद्यानमेव क्रीड़ास्थानं त्वद्विधस्य।

मदनकः । क्रीड़ास्थानम्? तत्, कथं मां निगड़बद्धं कृत्वा तत्र नयसि?

चरः । क्रीड़नार्थम्।

मदनकः । केन क्रीड़िष्यामि?

चरः । शूलेन, मृत्युना च।

मदनकः । भद्र, नाहमवगच्छामि तव वचनम्। कथं मामत्र नयसीति कृपया कथय।

चरः । भोस्त्वां वध्यभूमिं नयामि। तत्र ते शूलारोपणं भविष्यति।

मदनकः । (भीतिविह्वलः) हन्त भाग्यम्! शृणु भ्रातः, ब्राह्मणोऽहम्। एतदुपवीतं मे पश्य। (करेणोपवीतं स्पृष्ट्वा प्रदर्शयति) अतो रक्ष मामसहायं ब्राह्मणतनयम्।

चरः । तूष्णीम्भव। ब्राह्मणस्त्वं चाण्डालो वेति कौटिल्यो विचार-यिष्यति। अतो निःशब्दमार्य्यचाणक्यसमीपमागन्तव्यम्।

मदनकः । अहो चाणक्यः? हन्त भोः।

कृतान्तमिव दुर्द्दान्तं नन्दवंशप्रणाशकम्।
चाणक्यमुपगच्छामि मृगः केशरिणं यथा॥

हा हा, को नु त्रास्यते मां यमस्य कवलात्?

चरः । मौनम्! एतद्धि मौर्य्यराज्यम्।

मदनकः । (स्वगतः) हा भाग्यम्!

नन्दराज्यात् समानीतो मौर्य्यराज्यमभाग्यभाक्।
यमराज्यं प्रयास्यामि, को निर्बन्धो विधेर्मयि?

(चरं प्रति) भो, मा वधीः मा वधीः दीनब्राह्मणम्। रक्ष माम्, रक्ष माम् राजानुचर।

दूरान्नेपथ्ये चाणक्यः । आः, कः खलु भयाकुलो जीवनरक्षार्थमावेदयति ?

( चरो मदनकश्च भीतौ तिष्ठतश्चाणक्यश्च प्रविशति । )

प्रविश्य चाणक्यः । ( चरं प्रति ) भो, कोऽयम् ? किं वा कृतमनेन ?

चरः । ( प्रणम्य ) देव ! अयं नन्दराजवयस्यः पलायमानो वन्दी कृतः ।

चाणक्यः । मूर्ख ! न जानासि किम्—

कौटिल्ये जीवति शासति च वसुधां चन्द्रगुप्तेऽत्र मौर्य्ये ।
न कोऽप्याचरेदविनयं ब्राह्मणेषु नारीजनेषु च ॥

तन्मोचय बन्धनं निरपराधब्राह्मणस्य । मुञ्च राजवयस्यम् ।

( चरो विदूषकस्य शृङ्खलं मोचयति । )

चाणक्यः । ( मदनकं प्रति ) भो ब्राह्मण, मोचितोऽसि । तत् स्वच्छन्दं गम्यतामभिमतस्थानम् । अथवा निःशङ्कमत्र स्थीयताम् ।

मदनकः । जयति देवः । वन्दे भवन्तम् । अहो, दिष्ट्या रक्षितोऽस्मि ।

( प्रणम्य प्रस्थानं करोति । )

चाणक्यः । ( चरान् प्रति ) अये ! मौर्य्यराष्ट्रे निरपराधा न हि दण्डनीयाः । पूजितव्याश्च गोब्राह्मणविद्वांसो नारीजनाश्च । ( क्षणं विरम्य ) यातु—आकार्य्यतामधुना मौर्य्यभूपतिः ।

चरः । यथाज्ञापयति देवः ।

( प्रस्थानं करोति । )

चाणक्यः । ( उद्याने कतिचित् पदानि गत्वा स्वगतम् । ) अत्र जनविरहिते शून्योद्याने मौर्य्येण सार्द्धं मन्त्रयिष्ये ।

( परिभ्रमति । )

( प्रविशति चन्द्रगुप्तः । )

चन्द्रगुप्तः । आर्य्य, वन्दे भवन्तम् ( वन्दते । )

चाणक्यः । स्वागतं मौर्य्यस्य ! वीर, इत आगच्छ ।

( चन्द्रगुप्तः समीपतरं गच्छति । )

चाणक्यः । निर्ज्जनस्थानमेत्र मन्त्रणायोग्यम् ।

यतः । शून्ये नदीतटेऽरण्ये निर्ज्जने शिखरे तथा ।
मन्त्रयेद् गूढ़वस्तूनि त्यक्ते वा जीर्णमन्दिरे ॥

चन्द्रगुप्तः । शिरोधार्य्यं भवदनुशासनम् ।

चाणक्यः । ( सस्नेहम् ) तदत्र शिलाखण्डे उपवेशनं कुरु । राजनीतिं ते उपदिशामि ।

( उभावुपविशतः । )

चन्द्रगुप्तः । आदिशत्वार्य्यः ।

चाणक्यः । शृणु राजन् । दुर्ज्ञेया राजनीतिर्विचक्षणमपि विभ्रामयति । जानीहि, प्रजा एव वलं राज्यस्य । असंयतस्य नरपते-र्विनश्यति राज्यमचिरेण । प्रजापालनं हि राजधर्म्मः । शत्रुर्नोपेक्षणीयः, किन्तु मा कुरु सुहृद्विच्छेदम् ।

चन्द्रगुप्तः । देव ! महामूल्यं भवतामुपदेशं शिरसा गृह्णामि ।

चाणक्यः । पुनश्च श्रूयताम् । दूताश्चाराश्च नियोक्तव्याः । कोषं वलञ्च वर्द्धयेत् । तोषयेद् गुणिनोऽर्थदानेन, विदुषश्च सम्पूजयेद् वृत्तिदानेन सम्माननेन च । गिरिदुर्ग-वनदुर्ग-जलदुर्गेषु सैन्यानि सुगुप्तं निवेशयेत् ।

चन्द्रगुप्तः । अथ नगररक्षार्थं किं करणीयमिति श्रोतुमिच्छामि ।

चाणक्यः । शृणु । प्राकारैर्वेष्टयेद् राज्यं खानयेत् परिखास्तथा ।
भूगर्भान्तानधोमार्गान् कारयेद् वै समन्ततः ॥

अपरञ्च—

धनिकान् श्रोत्रियान् वैद्यान् विदुषश्च गुणान्वितान् ।
स्थापयेद् भूमिदानेन शिल्पिनश्च प्रयत्नतः ॥

चन्द्रगुप्तः । अहो, सारगर्भ उपदेशः । तत् सर्व्वथैव स्मरणीयः ।

चाणक्यः । ततश्च श्रूयताम्, नरपतिना छद्मवेशेन प्रजानां कर्म्मचारिणाञ्च

कृत्यानि निरीक्षितव्यानि। देशकालपात्राणि च विचार्य्य यथोपयुक्तां नीतिं प्रयोजयेत्।

शेषतश्च— धर्म्मेण युक्तं भविता च राष्ट्रं
शस्येन पूर्णं भयशोकमुक्तम्।
प्रजानुपालाः प्रभवन्तु भूपा
राज्यञ्च भूयात् समुखं सुयशम्॥

चन्द्रगुप्तः। जयति जयति देवः। एषा यावच्चन्द्र-दिवाकरं विजेष्यते स्वमहिम्ना कौटिल्यनीतिः। पृथिव्या मङ्गलाय।

॥ परिसमाप्तः षष्ठोऽङ्कः ॥

॥ इति द्वितीयं दृश्यम् ॥

—०—

## सप्तमोऽङ्कः

### प्रथमं दृश्यम्

चन्द्रगुप्तस्योद्यानभवनम्—कौण्डिन्यश्चाणक्यशिष्यया सह जल्पति।

कौण्डिन्यः। अहो, अपूर्व्वं खल्वार्य्यस्य चरितम्! तथा च—

विचित्रमेतन्महतां चरित्रं
चाणक्यविप्रो यदिह प्रकामम्।
ब्राह्मण्यनिष्ठस्तपसा च युक्त
आसक्तिहीनो भजते हि राज्यम्॥

वालिका। मैवम्। ब्राह्मण्यं न तु वीर्य्यहीनम्। क्षात्रधर्म्माद् विच्छिन्नं ब्राह्मण्यं न हि जीवति। क्षात्रं च वृत्तं तथैव। स्मर तावद् भारतवर्षस्येतिवृत्तम्। सौगतानां निर्व्विशेषेणाहिंसाधर्म्म-प्रचारणाद् वैराग्यमाश्रितेषु नरपतिषु क्षात्रधर्म्मो भारतवर्षाद्

विलुप्तिं गतः। तेन समभवदभिनवो विपर्य्ययः। अतो ब्राह्मण्याश्रितक्षात्रशक्ति-प्रतिष्ठया प्रयोजनं सञ्जायते। किञ्च यदैव वीर्य्यहीनेषु राज्येषु नरपतयो विलासव्यसनिनो दुर्बलान् परिपीड़यन्ति, तदैव शक्तिशालि-राष्ट्रस्थापनं प्रयोजनीयम्। एतदेवार्य्यकौटिल्यस्य साधनम्।

कौण्डिन्यः। अहो! विजयते तेन महीयसी चाणक्यनीतिः। वयमपि गुरोः साधनसहायभूता धन्याः।

बालिका। जयति श्रीगुरुः। अतुलनीयं हि महाजनचरित्रम्।

यतः,—

अनासक्तिश्च तेजश्च नीतिः कारुण्यमेव च।
वीर्य्यं चारित्रमाधुर्य्यं कौटिल्ये सर्व्वसम्भवः॥

(प्रस्थानं करोति।)

कौण्डिन्यः। जयति श्रीगुरुः—जयति श्रीगुरुः।

(अनुगच्छति।)

(ततः प्रविशति चिन्तामलिनोऽमात्यो गुणसिन्धुः।)

अमात्यः। (स्वगतम्)—

असंशयं राजमतिर्विचित्रा
स्वार्थान्धहिंसाकुटिला च रम्या॥
तन्नात्र विघ्नः परिणामवृत्तं
कौटिल्यनीतिर्भविता च का मे॥

किञ्च। (निःश्वस्य)—

अपश्यतश्चारुसुतस्यपङ्कजं
विलुप्तसौख्यं व्यथते मनोऽद्य मे।
मदेकचित्ता दयिता सती प्रिया
क्व वा न जानेऽश्रुचयं विमुञ्चति॥

( अन्यतश्च चाणक्यश्चन्द्रगुप्तेन सह मञ्चं प्रविशति, पश्यति चामात्यं गुणसिन्धुम् । )

( चाणक्यः अमात्यं प्रति अङ्गुलिनिर्देशं कृत्वा चन्द्रगुप्तं कथयति । )

चाणक्यः । अयं स मन्त्री सुमतिर्विचक्षणः
सुशासनोपाय-नयोपनिष्ठितः ।
प्रजानुरक्तश्च नरेन्द्रपूजितः
श्रिया विहीनो लसतीव चन्द्रमाः ॥

तन्मौर्य्य चन्द्रगुप्त ! नीतिविशारदस्तावदमात्यो गुणसिन्धुर्भाग्यविपर्य्ययादस्माकमायत्तो विचारं प्रतीक्षते । किन्तु, यथा मत्तगजेन्द्रोऽपि वशमानीतो महोपकारं साधयति, तथैवैष गुणगणालङ्कृतोऽनुकूलत्वं प्रापितः परमं हितं साधयेत् । अतो मतिमन्तमेनं तव हितार्थे नियोजयामि ।

चन्द्रगुप्तः । देव ! शिरोधार्य्यं मे हितकरं भवदीयवचनम् । तद् भवानेव प्रणतं मामनुगृह्णातु ।

चाणक्यः । साधु । राजनीतिं मे पूर्णतां नयामि । नूनमचिरेणैवायं तव हितार्थं भवतु तदुपगच्छामो वयममात्यसकाशम् ।

( अमात्यसमीपमागच्छतः । )

( अमात्यं प्रति ) माननीयामात्य, एष मौर्य्योऽभिवादयते भवन्तम् । अहमपि भवन्तं संवर्द्धये । ( चन्द्रगुप्तं प्रति ) मौर्य्य चन्द्रगुप्त, सम्मान्यताममात्यप्रवरः ।

चन्द्रगुप्तः । ( अमात्यं सम्मानयति ) आर्य्य ! अभिवादये भवन्तम् ।

अमात्यः । जयति मौर्य्यराजः । नमः कौटिल्याय ।

( प्रत्यभिवादयते । )

चाणक्यः । मतिमन् ! माऽस्तु खेदः । प्राज्ञोऽस्ति नीतिनिपुणो भवान् विमलचारित्रबलेनास्माकं हृदयानि विजयते ।

चाणक्यः। तेनाशेषगुणालङ्कृतस्य भवतो वान्धवत्वं कामयमान आवेदयामि, श्रीमतश्चन्द्रमौर्य्यस्य हितार्थे भवतु भवानिति।

अमात्यः। महाभाग, दीनोऽस्मि कृतित्वहीनो न खलु योग्यपात्रं महतामनुग्रहस्य !

चाणक्यः। मैवम्। न खलु महात्मान आत्मगुणानवलोकयन्ति। यातु। (चरान् प्रति) भोः!

चराः। आज्ञापयत्वार्य्यः।

चाणक्यः। आहूयतामार्य्य-कञ्चुकी।

चराः। यद्देव आज्ञापयति। (प्रस्थितः)

(प्रविशति च क्षणात् परं कञ्चुकी।)

प्रविश्य कञ्चुकी। जयति नरपालः। विजयतामार्य्य-कौटिल्यः। अथ किमादिशन्ति भवन्तः ?

कौटिल्यः। आर्य्य कञ्चुकिन्! गम्यतामन्तःपुरवर्त्ति इन्दुभवनम्। तत्र गत्वा सविनयमुच्यताममात्यपत्नी वसुदेवी यत् सा मुक्तेति। अतः सा स्वच्छन्दं विहरत्वन्तःपुरेषु। नूनमचिरेणैव भवेत्तस्याः स्वजनेन समागम इति।

कञ्चुकी। यदार्य्य आज्ञापयति।

(प्रस्थानोद्योगं करोति।)

चाणक्यः। किञ्च, श्रूयताम्। आनीयतामत्राभयदानपुरःसरममात्यपुत्रः सुनन्दनः।

कञ्चुकी। तथास्तु। आनयामि वालकम्।

(कञ्चुकी गच्छति। चिन्तयति चामात्यः।)

चाणक्यः। (अमात्यं प्रति) अमात्य गुणसिन्धो ? अलं चिन्तया। अभयं ते ददामि।

(नेपथ्ये वीणा करुणं ध्वनति।)

( कञ्चुकिनानीयमानोऽमात्यपुत्र आयाति )

प्रविशन् दूरादमात्यपुत्रः । कुत्र तातः ? क्व मे पिता ।

कञ्चुकी । ( उच्चैः ) अत्र तिष्ठति । तदेहि ।

( उभौ प्रविशतः । )

आर्य्य ! आनीयतेऽत्र वालकः । तद् गृहाणेमम् ।

( चाणक्यायार्पयति । )

चाणक्यः । वालकं करेण गृहीत्वा स्वगतम्—

कमलदलसुरम्यं पूर्णचन्द्राभिरामं
मृगशिशुमिव मुग्धं वालकं स्निग्धदृष्टिम् ।
करुणरसमिवेमं पश्यतो मे प्रमूर्त्तं
भवति मनसि वाञ्छा वक्षसा धारणार्थम् ॥

( चाणक्यो वालकस्य पृष्ठे वामहस्तं निधाय तस्य शिरः आजिघ्रति । )

चाणक्यः । ( सस्नेहं वालकं कथयति ) जात ! चिरं जीव । पश्य, इहैव तव पिता तिष्ठति ।

( अमात्यं निर्द्दिशति । )

वालकः । अहं तातसमीपं गमिष्यामि । तात, तात !

( पितरमभिधावति । )

चाणक्यः । अमात्य, पुत्रं तेऽद्य समर्पयामि । तद् गृह्यतां नन्दनः ।

( वालकं पित्रे समर्पयति । )

( अमात्यः पुत्रं गृहीत्वा वक्षसि निधाय तस्य शिरश्चुम्वति, करोत्यादरञ्च । )

अमात्यः । ( साश्रुनयनः ) साधुः कौटिल्यः । साधुः कौटिल्यः ।

—

(पुत्रं प्रति) वत्स, दिष्ट्या त्वां पश्यामि। तज्जीव त्वं शरदां शतम्।

(क्रोड़े संस्थाप्याद्रियते।)

बालकः। तात! तात!

(पितुरङ्कमाश्रयते।)

अमात्यः। (चाणक्यं प्रति) आर्य्य कौटिल्य! जयति भवान्। एवं कृपया पूरयसि मे मनोरथम्। तदुच्यतामतः-परं को हि मयि आदेशः?

चाणक्यः। (सस्मितम्) अलमुत्कण्ठया धीमन्। अचिरेणैव पत्न्या सम्मिलितः सानन्दं गतव्यथः सपरिजनो विहरिष्यसि। अतः परिजनसङ्गेन सुचिरं ते विमलं सुखमस्तु।

अमात्यः। (कृतज्ञतावेगेन स्खलितकण्ठः) धन्योऽस्मि। अहो, महाननुग्रहः। धन्यः कौटिल्यः, धन्यः कौटिल्यः।

(कृताञ्जलिरुत्थायाभिवादयते।)

सर्व्वे। जयति कौटिल्यः। जयति कौटिल्यः।

॥ सप्तमाङ्के समाप्तं प्रथमदृश्यम् ॥

—०—

## सप्तमाङ्के

### द्वितीयं दृश्यम्

( कुसुमपुरं—राजपथः—चाणक्यशिष्या गैरिकवसना गायन्ती गच्छति । ]

गानम्

भुवनेश्वर हे भञ्जय तमोवन्धनम्
कुरु पाशखण्डनं शान्तिसौख्यमण्डनम् ।
ध्वनति दूरे गहनवीणा—शान्तिकरुणवीणा
अस्तमेति कनकलेखाच्छायातिमिरलीना ॥
चलति मरुपान्थः ।
दिनान्ते परिक्लान्तः ॥
शरणमहो शान्तिनीड़ं तापजालभञ्जनम् ।
मम जीवनमिह रिक्तम् ।
अस्तु सुधाचन्दनसिक्तम् ॥
एहि ! परम-प्रिय मनोहर कुरु मोहखण्डनम् ।
प्रापय मां तिमिरपारं श्रावय मुक्तिवन्दनम् ॥

( प्रस्थानं करोति । )

( पटः परिवर्त्तते—राजभवनम्—सभायां सपार्षदश्चन्द्रगुप्तश्चाणक्य-कोण्डिन्यौ च । )

चन्द्रगुप्तः । ( चाणक्यं प्रति )—जयतु देवः ।

चाणक्यः । स्वस्ति स्वस्ति । मौर्य्यचन्द्रगुप्त ! गुणानुरागिणी राजलक्ष्मीर्गुणिनं त्वामुपागता । निःसपत्नमधुना च राज्यम् । अतो वीर ! भुजच्छायया रक्षेदं राष्ट्रं धर्म्मतः स्वकीयवीर्य्यवलेन ।

चन्द्रगुप्तः । देव, विजयते सर्व्वथा भवतः सुमहती कुशलराजनीतिः । तदत्र राज्यप्रतिष्ठायामशेषनीतिचूड़ामणेर्भवतो जयः प्रतिपद्यते ।

सर्व्वे । जयति जयति मौर्य्यः ।

चन्द्रगुप्तः । नहि नहि । कुरुत सर्व्वे नीतिचूडामणेर्महात्मनः कौटिल्यस्य जयघोषणम् ।

सर्व्वे । जयति जयति कौटिल्यः । जयति चाणक्यः ।

चाणक्यः । अलमलम् । ( चन्द्रगुप्तं प्रति ) तात ! ब्रूहि, अतःपरं किमहं ते उपकरोमि ।

चन्द्रगुप्तः । आर्य्य ! त्वत्कृपयाहं सिंहासने प्रतिष्ठितः ।

यतः—कौटिल्ययोगान्मम राज्यमाप्तं
नाशं गतोऽरिर्मुदिताश्च लोकाः ।
प्रतिष्ठितं नीतिनिवद्धराष्ट्रं
पूर्णाश्च कामा अथ किं प्रयाचे ॥

किञ्च—दुरवगाहं तेऽतलस्पर्शस्नेहमुदारचरितम् । लोकोत्तरस्य ते विशालचरित्रस्य तत्त्वं को जानाति ? तदद्यात्मानं पुष्पाञ्जलीकृत्य तव चरणकमलयोः सर्व्वथा निवेदयामि ।

( पादयोर्मुकुटं स्थापयति । )

( चाणक्यः करेण नरपतिं समुत्तोल्य सिंहासने स्थापयति, न्यस्यति च मुकुटं राजशिरसि । )

चाणक्यः । अलं नरमणे ! वीरोऽसि, तद्वीर्य्यलब्धं रत्नमुकुटं तवैव योग्यम् । किञ्च—

ब्राह्मणोऽहं न राज्येच्छा व्रतं मे धर्म्मसाधनम् ।
अतः संस्थाप्य राज्यं ते प्रयच्छामि करे प्रिय ॥

चाणक्यः । सर्व्वेऽद्य जानन्तु,—

सर्व्वे । जयतु कौटिल्यः, विजयतां चाणक्यः ।

नन्दे हतेऽत्र संस्थाप्य मौर्य्यञ्चापि नृपासने ।
पूर्णव्रतोऽस्मि सानन्दं पुनर्वध्नामि मे शिखाम् ॥

( शिखाबन्धनं करोति । )

(चन्द्रगुप्तं प्रति) तन्नरमणे, शेषमुपदिशामि त्वाम्। इयं हि हिमाचलकिरीटिनी सागरचुम्बितचरणकमला अस्माकं जन्मभूमिः। श्रीरामचन्द्र-युधिष्ठिरादिस्मृतिविजड़ितं वाल्मीकि-व्यास-वशिष्ठ-याज्ञवल्क्यादिचरणपूतमिदं भारतवर्षं चिरं ते मातृस्थानीयमस्तु। आराधय तद्गुनां सती-सावित्री-दमयन्त्यरुन्धती-पुण्यपादरजोविमण्डितां जननीं जन्मभूमिं सुखशान्तिगौरवेण, प्रेम्णा धर्म्मेण तथा वीर्य्यवलेन।

चन्द्रगुप्तः। (सोच्छ्वासम्) देव, देव!

(प्रणमति चरणान्ते।)

चाणक्यः। (सस्नेहं करेणोत्तोल्य) अभयं वीर। जयोऽस्तु ते। विजयस्व।

(प्रविशति चाणक्यशिष्या वालिका।)

वालिका। तात, अस्मान् परित्यज्य कुत्र गमिष्यसि?

चाणक्यः। (सस्नेहं तस्याः शिरः स्पृष्ट्वा) जाते, मा विषीद। अहं हि—

धर्म्मराज्यं प्रतिष्ठाप्य भारते श्रीगुणान्वितम्।
पूर्णव्रतोऽस्मि सानन्दं गच्छामि तपसे वनम्॥

तत् त्वमपि कल्याणि, व्रतचारिणी सुमङ्गलदेशप्रेमप्रचारेण भारतसुतान् मातृमन्त्रोद्वोधितान् कृत्वा खण्डच्छिन्नविक्षिप्तं भारतवर्षमैक्यं प्रापय, उद्यापय च तपस्यामात्मने तथा विश्वमङ्गलाय।

(वालिका अश्रुमलिना विषादं नाटयति।)

कौण्डिन्यः। अथ मामपि किमाज्ञापयति आचार्य्यपादः?

चाणक्यः। (कौण्डिन्यं प्रति) श्रीमन्, आनीयन्तां तावन्मे दण्डकमण्डलु-चीरखण्डानि। न पुनरद्य विषादः करणीयः पुत्रक!

(कौण्डिन्यो निःशब्दमन्तः प्रविश्य पुनश्च प्रत्यावृत्य तत्तद् द्रव्यजातमानीय गुरवे समर्पयति।)

चाणक्यः। (शिष्यस्य शिरः स्पृष्ट्वा) स्वस्ति वत्स। अतःपरमग्निहोत्र-

परो धर्म्मं साधय। आरण्यकं साधयतश्च मे शुभाशिषस्त्वां चिरं रक्षिष्यन्ति।

(कमण्डलुदण्डचीरादिकं नीत्वा सस्नेहं चन्द्रगुप्तं प्रति पश्यति, करोति चाशिषम्।)

धर्म्मो वर्द्धताम्। सर्व्वेषां सुखमस्तु।

(प्रस्थानं करोति।)

सर्व्वे समुत्थाय। जयतु कौटिल्यः। जयतु चाणक्यः।

(कौण्डिन्योऽन्तर्धत्ते।)

बालिका। तात, तात ? (चाणक्यमनुसरति)

(कौण्डिन्यो धीरमधुरस्वरेण भरतवाक्यमुदीरयति नेपथ्ये च वीणा सुकरुणं ध्वनति।)

भरतवाक्यम्

लोकानुरञ्जनपरा विलसन्तु नित्यं
नृपाः सुनीतिकुशला गुणिनां हिताय।
भद्राणि सन्तु जगतामपयान्तु विघ्ना
लक्ष्मीः प्रसादमधुरा रमतां चिराय॥

इति सप्तमेऽङ्के द्वितीयं दृश्यम्।

॥ यवनिकापातः ॥

परिसमाप्तं महामहाध्यापक-कृष्णकान्तकृतिरत्नात्मज—श्रीविश्वेश्वरदेव-शर्म्म-विद्याभूषण-काव्यतीर्थेन विरचितं चाणक्यविजयं नाम नाटकम्।

। ॐ ब्रह्मार्पणमस्तु।

—०—

